तदिदं चास्मद्-गुरोश्चरितेषु परमुपलभ्यते । तथा हि—

लाटेन्द्रश्चन्द्रवर्मा नरपति-तिलकः कल्पिता तेन पुत्री
निष्पुत्रेणैक-पुत्रः कथितमपि तथा मन्त्रिणे तस्य[1] चारैः ।
तस्मात्[2] पुत्रावकल्पच्छलत इह महा-राज-सन्दर्शनार्थं
तेनाद्यानायितासौ निरुपधि दधता साधु षाड्गुण्य-चक्षुः[3] ॥९॥

च० त०—तदिदं बुद्धेरुत्कृष्टत्वमित्यर्थः । गुरोः मन्त्रि-भागुरायणस्य । चरितेषु राज-तन्त्र-विसंधानेषु । परम् अधिकम् । उपलभ्यते ज्ञायते । तथा हीत्युपक्रममाणः एकेन पद्येन कथा-मूल-संदर्भं क्रोडीकरोति ।

लाटेति । लाटानां देश-विशेषाणाम् इन्द्रः चन्द्रवर्मनामा नरपतीति । तिलकः, अस्तीति शेषः । निष्पुत्रेण पुत्राभ्यां हीनेन, पुत्र-दुहितृभ्यां रहितेनेति यावत् । "पुत्रौ पुत्रश्च दुहिता चे"त्यमरः[4] । तेन चन्द्रवर्मणा । कल्पिता बन्धुभ्यः प्रकटनं यथा तथा गृहीता ; मदीयेयमिति मनसि संकल्पितेत्यर्थः । पुत्रीति कर्तृ-पदमेतत्, तथा च पुत्र्येव । एकः केवलः । पुत्रीत्व-किंवदन्ती-लेश-वर्जित इति यावत् । "एके मुख्यान्यकेवला"[5] इत्यमरः । स चासौ पुत्रः एक-पुत्रः कल्पित इति शेषः । तथा च बन्धुभ्यो धनाद्यर्पणेन गृहीता पुत्री स्व-पुत्रत्वेन कल्पितेति भावः । अथ अनन्तरम् । तस्य चन्द्रवर्मणः । चारैः उत्कोच-लुब्ध-प्रणिधिभिः । मंत्रिणे भागुरायणाय । तथा न पुत्रोऽसौ पुत्रीति यथा तथेति यावत् । कथितम् आख्यानम् । निरुपधि अहेतुकं साधु शोभनं निरुपममिति यावत् षड् गुणाः यस्य तस्य भावः षाड्गुण्यम् । "संधिर्ना विग्रहो

प्रा० प्र०—मलिनं गुणमिति शेषः । संस्कारः परिशीलनम् । शुद्धा हि बुद्धिः किल कामधेनुरिति पाठे पाद-पूरणे हि-कार इति । अथवा शुद्धाहेः शेपस्येव बुद्धिरिति दिक् ॥८॥

एकः पुत्रः एकः केवलः स चासौ पुत्रः एक-पुत्रः कल्पितः इति शेषः । मन्त्रिणे भागुरायणाय । तस्य चारैः चन्द्रवर्मणश्चारैरित्यर्थः । तस्माच्चन्द्रवर्मणः । पुत्रावकल्प-च्छलतः पुत्र-कल्पन-व्याजात् । "अवकल्पस्तु कल्पना"इत्यमरशेषः । तेन मन्त्रिणा ॥९॥

---

1. V. r. मन्त्रिणस्तस्य   2. V. r. कामं   3 M. Sragdharā.
4. II, 6, 37, p. 97,   5. III, 13, 16, p. 190.

(आकाशे—) अये[1] ! चारायण ! किमात्थ ? अन्तेउरिका-सहस्स-परिवारस्स महाराअस्स किं तीए विणा विसूरदित्ति ? तं प्रति[2] मा मैवम्। अत्र किंचन मन्त्र[3]-बीजमस्ति, तत् कार्य-सिद्धावाविर्भविष्यति।

(नेपथ्ये—) पच्चूस-सुह-पडिबुद्धस्स सुप्पभादं देवस्स। संपदं खु—

माणो जाण ण खण्डिदो ससि-अरुक्केरेण वित्थारिणा
हुंकारा णअपंचमस्स वि चिरं जासु ठिदा कुंठिदाः।

च० त०—यानम् आसनं द्वैधमाश्रयः। षड्गुणा[4]" इत्यमरः। तदेव चक्षुः राज्य-तंत्र-दर्शिनां दृष्टिं दधना दधानेन। तेन भागुरायणेनापि। महाराजस्य केयूरवर्षस्य सन्दर्शनार्थं विलोकनाय तस्माच्चन्द्रवर्मनृपात्। पुत्र इत्यवकल्पः कल्पनाऽसौ छलं व्याजः तस्माच्छलतः चन्द्रवर्मणा पुत्र इत्येव यथा कल्पना कृता तथैव व्याजादिति भावः। "अवकल्पस्तु कल्पने"त्यमर-शेषः[5]। इह उज्जयिन्यां पुर्याम् असौ पुत्री। इयमेव मृगाङ्कावलीत्यग्रे स्पष्टीभविष्यति। आनायिता आत्मजनैरिति शेषः। अत्र अनन्यगत्या अध्याहार-त्रये कृतेऽपि न दोषः। अत एव "यश्च निंबं परशुने"त्यादौ अध्याहारेष्वपि न बाधकमिति दीक्षिताः पेठुः॥६॥

प्रा० प्र०—[ संस्कृतच्छाया—आकाशे ] अन्तःपुरिका-सहस्र-परिवारस्य महाराजस्य किं तया विना हृदयं खिद्यते इति ?

खिदेर्विसूर इत्यादेशः।

(नेपथ्ये) प्रत्यूष-सुख-प्रतिबुद्धस्य सुप्रभातं देवस्य। सांप्रतं खलु—

मानो यासां न खण्डितः शशिकरोत्कारेण विस्तारिणा
हुङ्कारा नव-पञ्चमस्यापि चिरं यासु स्थिताः कुण्ठिताः।

---

1. V. r. आर्य. 2. V. r. तं प्रति not found elsewhere.
3. V. r. मन्त्र not found. 4. II, 8, 19, p. 125.
5 Not traceable in the AS. of Puruṣottamadeva.

पच्चूमाणिअ-दोलणेण ललणा मोत्तूण माण-ग्गहं
चूडा-चुंबिद-वल्लहग्गचलणा वट्टन्ति ताः संपदम्[1] ॥१०॥

(पुनस्तत्रैव—) भो भो वंदि-विंदारआ मंति-विणिम्मिद-महा-राअ-वास-घर-पेरंत-वासी[2] महमल्लओ[3] तुह्मे भणादि को विअ कालो विज्जाहरमल्लदेवस्स विबुद्धस्स। ता कत्तो[4] पभाद-भोआवलिं ण गायधत्ति। (तत्रैव—)

जय जयोज्जयिनी-भुजङ्ग ! सुप्रभातं भवतः। सम्प्रति हि—

च० न०—अये संबोधने। चारायणो विदूषकः। तं महाराजं प्रति उद्दिश्य एवं मा वदेति शेषः। मंत्रस्य आलोचनायाः। बीजं कारणं ध्वनिश्च तद्बीजं च मृगांकावली-प्राप्त्या चक्रवर्तित्वलाभ इत्याशयः।

तत्र नेपथ्ये एव। "गोप-कन्या-भुजङ्गमि"ति लीलाशुकः। भुजङ्ग इति ध्वनिः। शोभनं च तत्प्रभातं सुप्रभातम्। "राजा देव" इत्यमरः[5]।

प्रा० प्र०—प्रत्यूषानिल-दोलनेन ललना मुक्ता तु मान-ग्रहं
चूडा-चुंबित-वल्लभाग्र-चरणा वर्तन्ते ताः सांप्रतम्[6] ॥

उत्कारः उन्नतिः आधिक्यमिति यावत्। नवपञ्चमस्य कोकिलस्य। सांप्रतं युक्तम्, "युक्ते द्वे सांप्रतम्" इत्यमरः[7] ॥१०॥

[ संस्कृतच्छाया—तत्रैव ] भो भो वन्दि-वृन्दारकाः, मन्त्रि-विनिर्मापित-महाराज-वास-गृह-पर्यन्त-वासी महामल्लको युष्मान् भणति क इव कालो विद्याधरमल्ल-देवस्य विबुद्धस्य, कस्मात् प्रभात-भोगावलिं न गायथ ?

वृन्दारका मुख्याः। "वृन्दारकौ रूपि-मुख्यावि"त्यमरः[8]। घरेत्यत्र गृहस्य घरादेशः[9]। पेरंतेत्यत्र "तूर्य-धैर्य-सौन्दर्याश्चर्य-पर्यन्तेषु र" इति[10] रत्वम्। भोगावलिं स्तोत्र-पद्धतिम्।

भुजङ्गो विटः।

---

1. M. Śārdūla-vikrīḍita　2. V. r. निवासी　3. V. r. महल्लअ-लोओ
4. V. r. ता कीत्ति　5. "राजा भट्टारको देव" इति, I, 6, 13, p. 33.
6. M. Śārdūla-vikrīḍita ; 1st, 2nd and 4th lines defective—and सां, स्या and न्ते respectively should be short.　7. III, 4. 12, p. 229.
8. III, 3, 16, p. 190.
9. PPr. 4, 32, p. 116 "गृहे घरोऽपतौ"।　10. PPr., 3, 18, p 66-67.

द्वित्रैर्व्योम्नि पुराण-मौक्तिक-मणिच्छायैः स्थितं तारकै-
र्ज्योत्स्ना-पान-[1]भरालसेन वपुषा [2]सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचल-[3]मस्तमुद्रस-मधुच्छत्त्रच्छविश्चन्द्रमाः
प्राची बाल-बिडाल-लोचन-रुचां जाता च पात्रं ककुभ्[4] ॥११॥

च० त०—द्वाभ्यां प्रभातं विशिनष्टि संप्रतीति । व्योम्नि गगने पुराणाः पुरातनाश्च ते मौक्तिकमणयः मुक्ता-श्रेष्ठाः तासामिव छाया जीर्ण-कान्तिर्येषां तानि । "द्वयोर्मणिः श्रेष्ठ-रत्नयोरि"ति रत्न-माला[5] । "उरश्चंचन्मुक्तामणि-सर्राम"ति सायणः । द्वे त्रीणि वा द्वित्राणि । तारा एव तारकाणि ; स्वार्थे अल्पार्थे वा कः ; तैः । "तारका तारा तारं तारकमि"त्यगस्त्यः । "तारकै-रनुरञ्जितमि"ति नाथचरण-कृत-हरिश्चन्द्र-चंपौ । स्थितं स्थितिः कृता । ज्योत्स्नायाः चन्द्रिकायाः । पान-भरात् पानातिशयात् । अलसेन संचाराक्षमेण । यद्यपि "चन्द्रांशवश्चको-राणामि"ति समय-पद्धतेः, "इन्धन करानैन्दवानि"ति भास्कर-प्रयोगाच्च ज्योत्स्ना-पानेति कवेः प्रमादः, तथापि "स्मित-ज्योत्स्ना-जालं तव वदन-चन्द्रस्य पिबतां चकोराणामि"ति सौन्दर्य-लहर्यां [6]भगवत्पाद-प्रयोगात्क्षंतव्यम् । वपुषा गात्रेण उपलक्षिताः चकोराङ्गनाः चकोर्यः । "हरिणाङ्गनाभिरि"ति नाथचरण-व्याख्यात-शाकुन्तले[7] । सुप्ताः निद्रां प्राप्ताः । उद्रसम् उद्गत-सारं च तन्मधुच्छत्त्रं क्षौद्र-पटलं, तस्येव छविः कान्तिर्यस्य निशापगमादशोभमान इति भावः । "क्षौद्र-पटलं मधु-मण्डलं मधुच्छत्त्रं चे"ति रभसः । मदाचोपोली इति महाराष्ट्राः । चन्द्रमाश्चन्द्रः । अस्ताचलस्य चरमाद्रेः मस्तं शिखरम् । "मौलौ च शिखरं मस्तं मस्तकं चे"ति विक्रमार्कः । यातो गतः । प्राची ककुप् दिक् । बालः अर्भकश्चासौ बिडालो मार्जारः, तस्य लोचनयोः याः रुचः शुभ्रता-मिश्र-पिङ्गल-कान्तयस्तासाम् । मांजरी[8] डोले[9] इति महाराष्ट्राः । बालेत्यत्र नीलेति युक्तः पाठः ; अतिप्रकाशकत्वात् । पात्रमाधारः । "योग्य-भाजनयोः पात्रमि"त्यमरः[10] । जाता ।११॥

---

1. V. r. समा 2. V. r. मत्ता 3. V. r. चूल
4. M. Śārdūla-vikrīḍita. 5. ARM. 2, 27, p. 20.
6. V. 63. 7. I, v. 23, p. 21.
8. Moles, p. 640. 9. Op. cit., p. 356. 10. III, 3, 180, p. 214.

अपि च—

भिन्दानः सुन्दरीणां पतिषु रुषमयं हर्म्य-पारावतेभ्यो
वाचालत्वं ददानः कवयितृषु गुणं प्रातिभं सन्दधानः ।
प्रातस्त्यस्तूर्य-नादः स्थगयति गगनं मांसलः पांसु-तन्त्या-
दस्वल्पादुत्थितानां नरवर-करिणां शृङ्खला-शिञ्जितेन[1] ॥१२॥

हरदासः । महत्येव प्रभाते प्रबुद्धो देव इति मन्त्रि-मन्त्र-प्रभाव एवैषः । यतः—

च०न०—पतिषु विषये सुन्दरीणां रुषम् अन्य-स्त्री-संगादि-जनित-क्रीडा-कोपं भिन्दानः दूरी-कुर्वन् गुरु-जनादि-निर्बन्ध-वशादितः परं सुरतावकाशो न भविष्यतीति भावः । हर्म्येषु धनिनां वासेषु पारावतेभ्यः कपोतेभ्यः वाचालत्वं कूंथन-शब्द-परंपरा-कारित्वं ददानः ददत् । दधान इति पाठे धारयन् प्रवर्तयन् इति यावत् । कवयितृषु कविषु । प्रातिभं प्रतिभा संबंधिनं "प्रज्ञां नव-नवोन्मेषशालिनीं प्रतिभां विदुरि"त्यौत्तराहाः । गुणं कवन-स्फूर्ति-गुणम् । एतेन त्रि-ग्रन्थीकारस्य राजशेखरस्य प्रातरेव कवन-स्फूर्तिरिति स्पष्टम् । पंच-षष्टि-प्रबन्धीकरण-धुरंधराणामस्मत्सनाथानां नाथचरणानां तु घटिकानां षष्टिरपि निबन्धान् निर्मातुं नालमित्यनितर-साधारणोऽयं विशेषो वत्सर-शताय वत्सलद्भिरसूया-रसिकैरनुग्राह्यः । संदधानः संदधत् संधान-युक्तं कुर्वन्निति यावत् । प्रातस्त्य इति कवेः प्रमादः । "प्रातस्त्यममतं प्रातर्भवं प्रातस्तनं मतमि"ति समय-कोशः । "प्रातस्तनैः कूजितैरि"ति "प्रातस्तनैर्मंगल-गीत-शब्दैरि"ति मयूर-धनंजयौ । अस्वल्पात् विस्तीर्णात् ।

प्रा० प्र०—मणीति रत्न-सामान्य-नामतया भेद-सद्भावान्न पौनरुक्त्यम् । अत एव "त्रुटित इव मुक्ता-मणि-सर" इति भवभूतिः[9] । मणि-शब्दः श्रेष्ठ-वाचीति केचित् । ककुप् दिक् ॥११॥

कवयितृषु कविषु । प्रातस्त्यः प्रामादिकः प्रयोगः । अत एव अपशब्द-शतं माघ इत्यादिः । कवीनां निरङ्कुशता ॥१२॥

1. M. Sragdharā. 2. PPr., 8. 44, p. 235. 9. URC., I.

कारुभिः कारितं तेन कृत्रिम[1]-स्वप्न-हेतवे ।
सुषिर-स्तम्भ-सञ्चारं नृपतेर्वास-मन्दिरम्[2] ॥१३॥

च० न०—पांसु-नल्वान् धूलि-मय-शय्यायाः। उत्थितानां नर-वर-करिणां धनिक-गजानां शृंखलाशिञ्जितेन विधूयमान-पद-निगल-शब्देन। "शृंखला निगले स्त्रियामि"त्यमर-माला। सांखली इति महाराष्ट्राः[3]। मांसलः पुष्टः। तूर्याणां तूर्येत्युपलक्षणं दुंदुभि-वादित्रादि-मेलानाम्। नादो ध्वनिः। गगनं स्थगयति व्याप्नोति। "पूरयति आच्छादयति व्याप्नोति स्थगयती"ति माठरः। "द्यावाभूमी स्थगयति भवत्सैन्य-भेरी-निनाद"[4] इति "हय-गज-रथ-योध-स्वान-शंख-स्वनादः।" "स्थगयतु निनदो मे रोदसी दुंदुभीनामि"ति विक्रम-चरिते डिंडिम-सार्वभौमौ। अत्र गुणं संदधान इति कथनेन प्रातर्यदा नियमादयं तूर्य-नादो भवति, तदा प्रायेण प्रबुद्धानां कवीनां कवन-स्फूर्तिरभिवर्धत इति भावो बोध्यः ॥१२॥

महत्येव प्रभान इत्यनेन निज-महाराष्ट्रत्वं कविना सूचितम्। अत एव मोठ्या च पहाटे इति महाराष्ट्रा[5] वदन्ति। एवमेव तत्र तत्राभिरूपैरूह्यम्।

यत इति। तेन मंत्रिणा नृपतेः राज्ञः कृत्रिमः औचित्य-वशादत्र सत्य इत्यर्थः। स चासौ स्वप्नः मृगांकावली-दर्शन-रूपः। तच्च तृतीयांक-प्रवेशके विचक्षणानुवादेन स्पष्टीभविष्यति। तस्य स्वप्नस्य हेतवे, तथाच जगति गजाधिरोहण-स्वप्नादिवदयथार्थीभूतस्य स्वप्नस्य प्रकृते कृत्रिमत्वोपपादनादेव यथार्थानुभव इति सूक्ष्म-दृष्टिभिरूह्यम्। अत एव "सच्चअं सिविणअं भोदु" इति विदूषकेण वक्ष्यते। कारुभिः शिल्पिभिः। सुषिराणि छिद्राणि तद्युक्त-स्तंभेषु संचारो गमनागमनादिकं यस्य यस्मिन् वा तत्। वासार्थं निवासार्थं मन्दिरं कारितम्। अत्र सुषिर-स्तंभेत्येतत् "लक्ष्मी-नृसिंह मम देहि करावलंबमि"ति भगवत्पादीये प्रयोगे विद्यमान-लक्ष्मी-नृसिंहवद्द्रष्टव्यम् ॥१३॥

प्रा० प्र०—कारुभिः शिल्पिभिः ॥१३॥

---

1. V. r. कृत्तिमं
2. M. Pathyā-vaktra.
3. Moles., p. 839, also सांकली ; see also सांखल । See Molesworth's interesting note under the latter, p. 839.
4. M. Mandākrāntā.
5. Moles., p. 497, पहाट ।

तदहमपि सुपिर-स्तंभ-प्रवेश-संचारापसारं[1] वास-गृहं निर्मितवतां तथाविधां रत्नैश्चतुष्किकां च[2] करिष्यतां शिल्पिनां[3] मन्त्रि-समादिष्टं दापयितुं महा-भाण्डागारं प्रति यास्यामि। (इति निष्क्रान्तः)।

इति विष्कम्भकः।

---

च० न०—सुपिर-स्तंभेषु प्रवेश-संचारापसाराः यस्य यस्मिन्वा तत्। "अपसारस्तु गमन" इति हलायुधः[4]। तथाविधां तथा तादृशी विधा प्रकारो यस्यास्ताम्। "विधा विधौ प्रकारे चे"त्यमरः[5]। सुपिर-स्तंभादि-युक्तामिति यावत्। रत्नैः स्फाटिकादिभिः। "रत्नं मणिर्द्वयोरश्म-जातौ मुक्तादिकेऽपि चे"त्यमरः[6]। चतुष्किकां च। चौखंडी इति महाराष्ट्राः[7]। शिल्पिनामिति। अत एव "कस्य ददाती"ति वाणः। संबन्धे षष्ठीति नाथाग्रज-श्री-चिदंबर-ब्रह्मचरणाः[8]। भाण्डागारं कोश-गृहम्। शुद्धो विष्कम्भः।[9] अत्र संस्कृत-प्राकृत-भाषयोः सत्त्वात्प्रवेशक इति केचित् मुह्यंति। तन्न। प्राकृत-पात्रस्य प्रवेशाभावात्। तथा चोक्तं रूपकादर्शे आकाश इति। नेपथ्य इति। प्राकृत-भाषणे [ अपि ? ] शुद्ध-विष्कंभकस्तेषां नाप्रवेशात् प्रवेशक इति। अथ "नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वे"ति लक्षणावश्यकत्वात्। [ इति विष्कम्भकः ]।

---

1. V. r. सुपिर-स्तंभ-संचारं
2. V. r. च रत्नवतीं चतुष्किकां
3. V. r. शिल्पवतां
4. Not in ARM.
5. III, 3, 101, p. 203.
6. II, 9, 33, p. 155.
7. Moles, "चौखणी", p. 295.

8. This reference to Cidambara, elder brother of their husband Ghanaśyāma, in a simple case like this shows the deep respect and esteem our commentators Sundarī and Kamalā had for him. For other references to him, see introduction.

9. As opposed to miśra or saṃkīrṇa viṣkambhaka. This interlude is śuddha, as only Haridāsa, a character of middling status, is presented on the stage. The other person employed here remains behind the screen and, therefore, though he is an actor of inferior grade, the interlude still remains śuddha. For the distinction between the śuddha and saṃkīrṇa viskambhakas, see SāhDar., 6, 55, 56, p. 293.

( ततः प्रविशति सुप्तोत्थितः[1] सोत्कण्ठो
राजा द्वारावस्थितो विदूषकश्च )

राजा। (साङ्ग-भङ्गमुत्थाय पठति—)

तद्वक्त्रं यदि मुद्रिता शशि-कथा हा हेम ! सा चेद् द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा।

च० त०—महत्त्येवेत्यादिना पूर्व-सूचितं राजानं प्रवेशयति—तत इति। ततः कृत्रिम-स्वप्न-दर्शनादनन्तरम्। सुप्त एवोत्थितः सुप्तोत्थितः। अथचालौकिक-व्यवहार-प्राचुर्येण सुप्तो वा न वा उत्थित इत्यर्थः। सोत्कण्ठः स्वप्ने मृगांकावलीं दृष्ट्वा विरहोत्कण्ठित इति यावत्। विदूषकश्च प्रविशतीत्यनुषङ्गः। अङ्गानां पृष्ठाद्यवयवानां भङ्गः आलस्य-निरासाय पार्श्व-द्वय-तिर्यक्-प्रचार-कर-धूननादिकं, तेन सहितं साङ्ग-भङ्गं यथा तथा। आङ्गमोड्या[2]देणें[3] इति महाराष्ट्राः।

स्वप्न-दृष्टां वर्णयति—तदिति। भिन्न-पदम्। तत् निरुपमम् अनिर्वाच्यत्वात्। तच्छब्द-चतुष्टयेऽप्येवमूह्यम्। वक्त्रं यदि वदनं चेत् स्वप्न-दृष्टं प्रकटीभविष्यन्-मृगांकावल्या इति शेषः। शशिनः चन्द्रस्य कथा नाम-प्रसक्तिः। मुद्रिता, संजाता मुद्रा यस्याः मुद्रिता। "मंजरित-पल्लवे"त्यमरुके भगवत्पादाः[4]। "कथा प्रसक्तावि"ति, "अङ्क-राज-जयैर्मुद्रे"त्यच्युतार्जुनौ। सा द्युतिः कान्तिश्चेत्। हेम कनकम्। द्वितीया। हा धिक्। "हा विस्मय-धिगर्थयोरि"ति नाम-निधानम्। तद् भिन्नं पदम्। चक्षुर्यदि

1. Not found in some MSS.
2. Moles, p. 670.
3. Op. cit., p. 423.
4. Vide p. 80 of our I. O. C., vol. I. where one Amaruka-śataka is found attributed to Śaṃkara Ācārya.

धिक्कन्दर्प-धनुर्भ्रुवौ च यदि ते किं वा वहु ब्रूमहे
यतसत्यं पुनरुक्त-वस्तु-विरसः सर्ग-क्रमो वेधसः[1] ॥१४॥

विदूषकः । ( उपसृत्य ) [2]वड्ढदु भवं ।

राजा । ( तदेव पठति ) ।

विदूषकः । अहो[3] ! अपुव्वो कोवि[4] पाभादिओ अज्झ-यण[5]-विही पिअ-वअस्सस्स ।

च० त०—नेत्रं चेत् । कुवलयैः । "उत्पलं कुवलयमि"त्यमरः[6] । हारितं पराजितमित्यमरः[7] । अपजयः प्राप्त इति यावत् । अत एव "देवं धन्विनं धृते भवताजौ हारितं रिपु-गणै-रि"ति सुभद्रा-परिणये मयूरः । चक्षुरिति जातावेकवचनम् । ते नेत्रे इति वा पाठः कल्प्यः । सुधा का न कापीत्यर्थः । धावल्य-विषय इति भावः । धनुः द्वितीया । वेधसो ब्रह्मणः । सर्गस्य सृष्टेः । क्रमः परंपरा । पुनरुक्तानि च तानि वस्तूनि शश्यादयः । तैः विरसः निःसारः । यतसत्यमित्येकं पदम् । "यतसत्यं ध्रुवं निश्चय" इति पदार्थ-माला । तथा च तस्या वक्त्र-द्युति-चक्षुः-स्मित-भ्रूषु सतीषु ब्रह्मणा पुनरुक्ति-विरसत्व-दोषाय शशि-हेम-कुवलय-कन्दर्प-धनूंषि निर्मितानीति भावः । ब्रूमहे इति बहुत्वं निर्वेद-सूचकम् । अत एव "वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती"ति नाथ-चरण-व्याकृत-शाकुन्तले[8] ॥१४॥

उपसृत्य पार्श्वे भूत्वा ।

तदेव तद् वक्त्रमित्यादि ।

प्रा० प्र०—[संस्कृतच्छाया—विदुषकः] वर्धतां भवान् । वड्ढदु इत्यत्र "वृधेर्ढ"[9] इति ढादेशः ।

अहो अपूर्वः कोऽपि प्राभातिकोऽध्ययन-विधिः प्रिय-वयस्यस्य ।

---

1. Quoted in SKB., 4. 72, p. 444; see also BR., 2, 178. M. Śārdūla-vikrīḍita.
2. V. r. सोत्थि वड्ढदु भवं
3. V. r. ही ही भोः ।
4. V. r. वित्र
5. V. r. पठन-
6. I, 9, 37, p. 45.
7. Cp. II, 8, 113, p 139.
8. I, v. 20, p. 68.
9. PPr., 8. 44, p. 235.

राजा । (तथैव) ।

विदूषकः । अहो अस्स हिअअक्खेवो[1] ता किं णु खु एदं । ( विचिन्त्य ) भोदु अणुबन्धिस्सं । णहु अणुप्पीडिओ[2] सहआर-पिट्ठ-गंठी[3] रस-सव्वस्सं मुंचदि । ( पुरतः स्थित्वा ) परिणाम-फुट्टिअं[4] विअ दाडिम-फलं फुट्टण-भूइट्ठं वट्ठदि मे हिअअं कोदूह-लेण, ता जधापत्थुयं आचक्खंतो[5] कज्ज-रहस्सेण संभावेदु मं पिअवअस्सो ।

राजा । ( तदभिमुखमवलोक्य ) अये चारायण ! सखे ! कथं न कथयामि, सुहृत्सञ्चारित-रहस्यं हि चेतः संविभक्त-चिन्ता-भारमिव लघूभविष्यति[6] ।

विदूषकः । अवहिदोह्मि ।

च० त०—अये आश्चर्ये।

सुहृदि मित्रे संचारितं प्रकाशितं रहस्यं येन। तथा च मैत्री-पद्धतौ[7] "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुंक्ते भोजयते चैव षड्विधं मित्र-लक्षणमि"ति। चेतः कर्तृ। लघूभविष्यतीत्येकं पदम् ॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अहो अस्य हृदयाक्षेपः। तस्मात् किं नु खल्वेतत्। भवतु अनुभन्त्स्यामि। अनुबन्धं करिष्यामि इति यावत्। न खलु अनुत्पीडितः सहकार-पृष्ठ-ग्रन्थिः रस-सर्वस्वं मुञ्चति। परिणाम-स्फुटितमिव दाडिमी-फलं स्फुटन-भूयिष्ठं वर्त्तते मे हृदयं कौतूहलेन, तस्मात् यथाप्रस्तुतम् आचक्षाणः कार्य-रहस्येन संभावयतु मां प्रिय-वयस्यः।

अवहितोऽस्मि ।

---

1. V. r. से हिअअ-विक्खेवो

2. For णहु standing for ण खु (न खलु), see Mṛc, p. 291: NāyDhKS, 1, 9; PrāV., 2. 198, p. 68. V. r. अपीडिओ ।

3. V. r. वेंट-गंठी वि ।

4. V. r. परिणामुप्पीडिदं ।

5. V. r. जधावुत्तमा—।

6. V. r. लघूभवति । Cp. AŚ, III, स्निग्ध-जन-संविभक्तं हि दुःखं सह्य-वेदनं भवति ।

7. See PT., IV. 12.

राजा । जाने स्वप्न-विधौ ममाद्य चुलकोनमैक्यं पुरस्तादभूत्
प्रत्यूषे परिवेष-मण्डलमिव ज्योत्स्ना-सपत्नं महः ।
तस्यान्तर्नख-निस्तुषीकृत-शरच्चन्द्र-प्रभैरङ्गकै-
र्दृष्टा काप्यबला बलात् कृतवती सा मन्मथं सन्मथम्[1] ॥१५॥

विदूषकः । भोः सुट्ठु क्खु तुमं महिला-लंपडो जादो जा सा तए णम्मदा-मज्जणुत्तिण्णा[2] दिट्ठा कुवलअमाला णाम[3] जाव तग्गदं किं पि अणुसंधेमि दाव[4] एसो अवरो गंडस्स उवरि फुडि-उब्भिदो[5] । हुं तदो तदो ।

राजा । ततश्च

च० त०—रहस्यम् आख्याति—जान इति ।

अद्य मम स्वप्न एव विधौ भाग्ये । "भाग्यं विधिरि"त्यमरः[6]...

प्रा० प्र०—मन्मथं हृदय-माथिनम् ॥१५॥

[संस्कृतच्छाया—विदूषकः] भोः सुष्ठु खलु त्वं महिला-लंपटो जातः । या सा त्वया नर्मदा-मज्जनोत्तीर्णा दृष्टा कुवलयमाला नाम यावत्तद्गतं किमप्यनुसन्दधामि तावदेषोऽपरो गण्डस्योपरि स्फोटिकोद्भेदः । हुम् ततस्ततः ।

मज्जनोत्तीर्णत्वेन आर्द्र-वस्त्रतया प्रत्यङ्ग-सौन्दर्यातिशयावलोकनं व्यज्यते । स्फोटिका "मुरुमि"ति महाराष्ट्रा वदन्ति । गण्डः कपोलः । अत्र अपर इति विशेषण-महिम्ना पूर्वमेको जात इति व्यज्यते । केचित् गण्डो विस्फोटः । "गण्डौ कपोल-विस्फोटा"वित्यमरः[7] । अन्यत्सर्वं पूर्ववत् । एतावेवार्थौ सप्रमाणावन्यार्थ-कलना-बुद्बुदास्त्वप्रमाणा इत्याहुः । जाव दाव इत्यत्र जा दा इति पाठेऽप्ययमेवार्थः । "यावदादिषु वस्ये"ति व-लोपः[8] । हुमित्याकर्णनाभिनयः ।

---

1. Cp. KM. 3. 3., the dream of the king Caṇḍapāla. V. r. मान्मथं मन्मथम् । Quoted in SKB., III, 136, p. 376. M. Śārdūla-vikrīḍita.

2. V. r. णम्मदा-जलुत्तिण्णा । 3. Cp. KM. 1. 26., 24.

4. V. r. ताव । 5. Cp. AŚ. 2, p. 129, l. 14-15, where the same proverb occurs in Vidūṣaka's speech. Folios 11 and 12 of the Camatkāra-taraṅgiṇī missing. So the comm. of ममाद्य (v. 15) to the end of v. 18 cannot be restored. V. r. पिंडओ संवुत्तो । 6. Cp. 1, 3, 28, p. 24.

7. Cp. II, 6,90, p. 106. 8. PPr., 4,5, p. 101.

आलिखितामिव चेतः-फलक-तलेऽस्मिन् विकल्प-वर्तिकया ।
बालां स्मर-चित्र-गतां विलोक्य जातोऽस्मि तद्वन्दी[1] ॥१६॥

( पुनस्तद्वृत्तमित्यादि पठति ) ।

विदूषकः । तदो[2] ।

राजा । शृणु श्रवणामृतम्, गण्डूषय मधु, पिब नयनामृतम् ।

हारोऽयं केरल[3]-स्त्री-विहसित-शुचिभिः पङ्क्तिभिर्मौक्तिकानां
सद्यः षाण्मासिकानां मम मदिर-दृशा दत्त-चन्द्रोदय-श्रीः ।
सोत्कण्ठं कण्ठदेशाज्झटिति कुच-तटादौ नमो मन्मथाये-
त्यस्तो यन्मध्य-रत्नं छुरयति ककुभः कौङ्कुमीभिः प्रभाभिः[4] ॥१७॥

विदूषकः । ( यज्ञोपवीतं परिमृश्य ) सुक्ख-कुस-रज्जु-कक्कस-दारस्स[5] मे बम्हणस्स[6] वअणेण[7] सच्च-सिविणत्तणं[8]दे भोदु । ( स्वगतम् ) अहो दासीए पुत्त[9] ! सिविणइंदजालिअ ! जाणासि महा-मदीणं वि[10] मदि-विब्भमं[11] कादुं । ( प्रकाशम् ) तदो[12] ।

राजा । ततश्च—

प्रा० प्र०—तद्वन्दी तदधीन इति यावत् ॥१६॥

[संस्कृतच्छाया—विदूषकः] ततः ।

शुष्क-कुश-रज्जु-कर्कश-दारस्य मम ब्राह्मणस्य वचनेन सत्य-स्वप्नत्वं ते भवतु । अहो दास्याः पुत्र स्वप्नेन्द्रजालिक, जानासि महा-मतीनामपि मति-विभ्रमं कर्तुम् ।

ततः ।

---

1. M. Āryā. 2. V. r तदो तदो । 3. Corresponding roughly to modern Malabar coast. IA. p. 188-191, CI. 2. 536. 4. M.Sragdharā.
5. V. r. रज्जु-हारस्स 6. V. r. महा-बम्हणस्स 7. V. r. भणिदेण ।
8. V. r. सच्चअं सिविणअं । 9. V. r. हदास दासीए पुत्त ।
10. अवि is the usual form. For the use of वि, see KPC., index ; GātSŚ, gāthās 11, 17, 23 : PrāV., 2. 218, p. 71 ; etc.
11. For the form मइ for मति, see KarG., 3, 18 ; 4, 11, 14 & 41 ; VisBhāṣ, gāthās 97 & 114. V. r. विब्भमं, no मदि । 12. V. r. तदो तदो ।

कथय किमिह बाले ! का त्वमित्युल्लपंस्तां
झटिति किल दुकूलस्याञ्चले धारयामि ।
अगमदथ निकेतात् काप्यसौ शारयन्ती[1]
नव-कुवलयमाला मांसलैर्दृष्टि-पातैः[2] ॥१८॥

विदूषकः । अध एक्क-पल्लंक[3]-गदाए देवीए किं पडिवण्णं ?

राजा । अत्रान्तरे ललित[4]-हार-लता-नितम्ब[5]-
संवाहन-स्खलित[6]-वेग-तरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृत-मान-तन्तु-
रन्तःपुरं[7] गतवती सह सौविदल्लैः[8] ॥१९॥

च० त०—अत्रान्तरे अस्मिन्नवकाशे ललिताय विलासाय हार एव लता तस्याः नितम्बयोश्च संवाहनेन सम्यग्वहनेन । "वहनं वाहनं वाह" इति त्रिरूपः । स्खलित-श्चासौ वेगः गमनार्थं जवः तेन तरङ्गितानि तरङ्गवत् संजात-कम्पनानि अङ्गानि अवयवाः यस्याः । स्खलितेति ध्वनिः । देवी मदन-सुन्दरी । "देवी कृताभि-षेकायाम्" इत्यमरः[9] । धृतः हार-नितम्ब-भार-सहनाय अवलम्बितः मानः सौन्दर्याद्य-भिमान एव तन्तुः आधार-सूत्रं यया । तथा सती शयनं शय्यां व्यपास्य परित्यज्य सौविदल्लैः कञ्चुकिभिः सह । "खाजे" इति महाराष्ट्राः । अन्तःपुरं स्त्री-गृहम् । अन्तः ध्वनिः । गतवती । मदपराधे सति कोपेन गतेत्यर्थः ॥१९॥

तस्या दौर्लभ्यं दृष्टान्त-पूर्वं वर्णयति । तृषितैः पिपासुभिः चकोर-व्यतिरिक्तै-रिति भावः । भृतः पूरितः भुवनस्य जगतः गर्भः उदरं यया सा ज्योत्स्ना चन्द्रिका ।

प्रा० प्र०—शारयन्ती चित्रयन्ती । "चित्र-वर्णेऽपि शारः स्या"दिति हेमः[10] ॥१८॥

[ संस्कृतच्छाया—विदूषकः ] अथैक-पर्यङ्क-गतया देव्या किं प्रतिपन्नम् ।

---

1. V. r. सारयन्ती । 2. M. Mālinī. Note the pun on Kuvalayamālā.
3. For the form, see also ṢaḍBC. index; for the alternative form पलिअंक, see PrāV., 2, 68. p. 49; SamAS, p. 35. 4. V. r. तरल ।
5. V. r. नितम्बा । 6. V. r. स्खलन । 7. V. r. रन्तःपुरात् ।
8. Quoted in SKB., v, 479, p. 721. M. Vasanta-tilaka.
9. 1, 6, 13, p. 33. 10. Cp. ARM., 3, 150, p. 199.

विदूषकः । अहो ! दे अणागरिअत्तणं[1] किंत्ति[2] तुए पुरदो भवीअ णाणुणीदा देवी । केच्चिरं वा चंदे पसादिद[3]-करे अविसट्ठ-कंदोट्टा[4] णीलुप्पलिणी चिट्ठदि ।

राजा । ( स-खेद-स्मितम् ) तदनुध्यान-पर-तन्त्र-चेतसा धारयितुं न पारिता किं पुनरनुनेतुम् ।

विदूषकः । सच्चं एव्व एदं[5] किदं—णडे दिट्ठे मुंडिदे उव-विट्ठो पई[6] मुंडिदो त्ति ।

राजा । ( स-खेद-स्मितम् ) भगवत्याशे ! सत्यमप्रति-हतासि । ननु विचारय चिरम्—

च० न०—अनागरिकत्वम् अचातुर्यम् ।

खेद-स्मिताभ्यां सहितं यथा तथा । मृगाङ्कावली-निमित्तजः खेदः । देवी-निमित्तजं स्मितमिति भावः । तस्याः मृगाङ्कावल्याः । अनुध्यानेन अनुसन्धानेन । न पारिता न समर्थिता ॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अहो ते अनागरिकत्वम् । किमिति त्वया पुरतो भूत्वा नानुनीता देवी ? कियच्चिरं वा चंद्रे प्रसादित-करे अविस्पष्टोत्पला नीलोत्पलिनी तिष्ठति ।

सत्यमेव एतत्कृतम्—नटे दृष्टे मुण्डिते उपविष्टः पतिर्मुण्डित इति ।

कन्दोट्ठमिति नीलोत्पल-वाचको निपातः ।

---

1. V. r. अणागरत्तणं । 2. V. r. किं । .

3. V. r. पसारिद । 4. PPr., see under Sūtra "दाढादयो बहुलम्" ; PM., "उक्तं कन्दोट्ठमुत्पलम्", p. 117. V. r. अविकसिद-कमला ।

5. V. r. सचकं तए ।

6. For the form, see PrāV., 1, 4, p. 2; ṢaḍBC, index; SurSC., 1, 176. For the form पइ, see PāiLNM, index; GātSŚ, 159; KalpaS, index.

क्व पातव्या ज्योत्स्ना भृत[1]-भुवन-गर्भाऽपि तृषितै-
मृणाली-तन्तुभ्यः सिचय-रचना कुत्र भवतु ।
क्व वा पार्या[2] मेयो बत वकुल-दाम्नां परिमलः
कथं स्वप्नः साक्षात् कुवलय-दृशं कल्पयतु ताम्[3] ॥२०॥

च० त०—तस्या दौर्लभ्यं दृष्टान्त-पूर्वं वर्णयति [—क्वेति]। तृषितैः पिपासुभिः चकोर-व्यतिरिक्तैरिति भावः। भृतः पूरितः भुवनस्य जगतः गर्भः उदरं यया सा ज्योत्स्ना चन्द्रिका। क्व पातव्या न क्वापि इत्यर्थः। मृणालीनां बिसानाम्। "मृणालं तु स्त्री-नपुंसकयो"रिति शाश्वतः[4]। तन्तुभ्यः सूत्रेभ्यः। "सिचयं वस्त्रमि"ति मुकुटः। वकुल-दाम्नां वकुल-माल्यानां परिमलो वा क्व पार्या परिमाणेन मातुं योग्यः मेयः। "मान-साधन-पात्रे तु पारी स्त्री"ति केशवः[5]। "पडिकोलगातराज" इति महाराष्ट्राः। स्वप्नः तां कुवलय-दृशं कथं साक्षात् कल्पयतु दृष्टि-गोचरीकरोतु। न कथञ्चिदित्यर्थः। बत खेदे। तथा च चन्द्रिका-पान-बिस-तन्तु-वस्त्र-निर्माण-पुष्पामोद-मानवत् सा दुर्लभतरेति भावः ॥२०॥

प्रा० प्र०—सिचयं वस्त्रम् ॥२०॥

---

1. V. r. ज्योत्स्नामृत 2. V. r. क्व वाऽपारो ; SKB., पारी-मेयो ।

3. Quoted in SKB., II, 60, p. 178, "क्व पेयं ज्योत्स्नाम्भो वदन-बिस-वल्ली-सरणिभिः" ; etc. M. Śikhariṇī.

4. Not traced in Śāśvata-koṣa.

5. Hemacandra: a deśī word; see DeśīNM., 6.37, p. 225, "पारी दोहन-भण्डे"। Really a tat-sama word: cp. KPK., p. 144, v. 103, "निपोप्यथ स्त्रियां पारी दोहनी रोहणीति च" ; Ksīrasvāmin on AK., 3. 5. 10, p. 233, "पारी पान-भाण्डम्" ; AC., 4. 90, p. 409, "पारी स्यात् पान-भाजनम् ।" See also Gau., gāthā 577.

( स्मृतिमभिनीय हृदय-देशमवलोक्य च )

स्वप्नः किमेष किमु संविदियं तु[1] साक्षाज्-
ज्ञानं किमेतदुभयात्मकमन्यदेव ।
यद्दृश्यते न खलु सा तरलायताक्षी
कण्ठ-प्रदेशमधिरोहति चैष हारः[2] ॥२१॥

विदूषकः । मण्णे णिसा[3]-पिणद्धेण[4] णिअ-हारेण विप्प-लद्धोसि ।

च० त०—स्मृतिं स्मरणम् ।

विविधं विकल्पयति स्वप्न इति । इयं साक्षात् संवित् किमु ? "चित् संवित्" इत्यमरः[5] । तु-शब्दः पाद-पूरणे । एतदिदम् । उभयात्मकं स्वप्न-साक्षात्-संविद्रूपम् अन्यदेव ज्ञानं किम् । कुत इति चेत् यद् यस्मात् कारणात् सा न दृश्यते खलु । यच्चेति योज्यम् । तथा च स्त्री-विषये स्वप्न-सत्यत्वमिति, हार-विषये तु साक्षात् संवित्-सत्यत्वमिति भावः ।

एतत् कथनं "स्वप्नो नु माया नु मति-भ्रमो नु" इति कालिदास[6]-कवन-च्छायानु-सरणमिति बोध्यम् ॥२१॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] मन्ये निशा-पिनद्धेन निज-हारेण विप्रलब्धोऽसि ।

---

1. V. r. च ।
2. M. Vasanta-tilaka.
3. णिसारंभ ।
4. Further uses: GatSS, 328; AupS. index; PāiLNM., v. 175, etc. For the kṛd-anta forms of the same, see AbhR., index; AŚ, NSP. ed., p. 185; etc.
5. I, 4, 1, p. 25.
6. AŚ, 6th act, p. 527; cp. URC., 1.35, p. 23,

राजा। ( मदनाकूतमभिनीय[1] )

बाणान् संहर मुञ्च कार्मुक-लतां लक्ष्यं तव त्र्यम्बकः
के नामात्र वयं शिरीष-कलिका-कल्पं यदीयं मनः।
तत् कारुण्य-परिग्रहात् कुरु दयामस्मिन् विधेये जने
स्वामिन् ! मन्मथ ! तादृशं पुनरपि स्वप्नाद्भुतं दर्शय[2] ॥२२॥

च० त०—मदनस्याऽऽकूतम् "आकूतमाग्रहावेशावि"ति नन्दी[3]।

दुःसह-बाधोऽसावधर्भ्यामनिष्ट-परिहारमिष्ट-प्राप्तिं च मन्मथं प्रार्थयते बाणानिति। संहर उपसंहर इति यावत्। "वीणां संहर नारदे"ति महा-नाटके[4]। अत्र बाण-प्रयोगे। येषामिदं यदीयं मनः। शिरीषस्य कलिका कोरकः तत्-कल्पं तत्-समानम् अतिसूक्ष्ममिति यावत्। उत्तर-वाक्ये यच्छब्दात् पूर्व-वाक्ये तच्छब्द-नियमाभावः। अत एव"वाभाति यत्-कृतिरि"ति नाथ-चरण-व्याख्यात-भोज-चम्पौ। "शिरीषस्तु कपीतन" इति धन्वन्तरिः[5]। "शिरी"ति द्रविडेषु ध्वनिः। तत् तस्मात्। अथवा तत्-कारुण्येत्येक-पदम् स प्रसिद्धश्चासौ कारुण्य इति। परिग्रहात् ममाङ्गीकाराद्धेतोः। "त्रिषु कारुण्यः करुणा-विषये जन" इति "परिग्रहः पत्न्यामङ्गीकारे चे"ति नाम-निधान-संसारावर्तौ[6]। जने मयि। तादृशं पूर्वं यथा तथा। तदिति अद्भुतस्य विशेषणं वा, अनिर्वाच्यमिति यावत्। स्वप्न एव स्वप्न-रूपं वा अद्भुतम् आश्चर्यं दर्शयेत्यर्थः। स्वप्ने वा पुनस्तद्दर्शनाज्जीवामीति भावः ॥२२॥

प्रा० प्र०—आकूतमावेशम्।

---

1. V. r. मदनानुकूल    2. M. Śārdūla vikrīḍita
3. Known through quotations only.
4. वीणां संश्रृणु नारद, p. 251.
5. Known as yajña-ḍumura ; see p. 193 of VaidŚS.
6. Cp. AK II, 4, 63, p. 64.
7. These works are probably lost for ever.

विदूषकः। एसो सिविणअ-लद्धेहिं[1]मोदएहिं गामं उवणिमंतेमि[2]। ता एहि गदुअ[3] देवीं पसादेह्म। वरं तक्कालोपगदो तित्तिरी ण उण दिअहंतरिदो मोरो[4]।

राजा। यदभिरुचितं भवते।

च० न०—वरमिति। "सन्निहित-परित्यागे मानाभावादि"ति "सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिरि"ति च भावः। "मोर मोरी" इति महाराष्ट्राः[5]।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] एष स्वप्न-लब्धैर्मोदकैर्ग्रामम् उपनिमन्त्रयसे।

गामम् इत्यत्र "सर्वत्र लवरामामि"ति[6] रलोपः। अत्र ग्राम-शब्देन ग्रामस्था जना गृह्यन्ते।

[ संस्कृतच्छाया—विदूषकः ] तस्मादेहि गत्वा देवीं प्रसादयावः। वरं तत्कालोपनतस्तित्तिरिः, न पुनर्दिवसान्तरितो मयूरः।

वरमिति सामान्ये नपुंसकम्[7]। "शक्यमञ्जलिभिः पातुं वाता इति" वाल्मीकिः। "शक्यमरविन्द-सुरभिरि"ति कालिदासस्य[8]। तित्तिरिः पक्षि-भेदः। मोरो इत्येतत् "मयूर-मयूखयोर्वे"ति सूत्रेण सिध्यति।

---

1. For सिविण, Prākṛta form of svapna, see PPr, 1, 3, p, 6; 3 62, pp. 90—91. Other forms: सिमिण, सुमिण, see PrāV, 1.46, p. 10; Sur-SC., 3.91 & 97; SvapV., p 49. Further instances of लद्ध:—PrāV., 3. 23, p. 75 & 134, p. 95; AupS., index. A. r. सो तुमं before सिविणअ

2. Cp. the maxim अजात-पुत्र-नामोत्कीर्तन-न्याय, LaukNA, II. 1.

3. Śauraseni form of गत्वा, acc. to the sūtra क्त्व-गमोर्दुअः, Śauraseni, 10, p. 279 of PPr. Alt. form गमिअ।

4. V. r. तक्कालोपगदा...दिअहंतरिदा मोरी। Cp. KāmS., I. 2. 23, p. 51, वरमद्य कपोतः श्वो मयूरात्।

5. Moles, p. 670

6. PPr., 3. 3, p. 60; v r. लवराम्।

7. It is quite unnecessary to explain the word वरं as सामान्ये नपुंसकम् like the word शक्यम्, as वरं is neuter in the sense of 'comparatively speaking, better'. Cp. AK. 3. 3. 174, p. 213, "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्-प्रिये।"

8. AŚ. III, p. 225; cp. "शक्यमिति रूपं विलिङ्ग-वचनस्यापि कर्माभिधायां सामान्योपक्रमात्" इति वामनः।

विदूषकः। पणअ-पणमंत-सामंत-[1]सहस्सअं अत्थाण-[2]मंडव-मग्गम् उज्झीअ इमिणा खिडक्किआ[3]-दुवारेण[4] पमोअ[5]-उज्जाणं पविसिअ[6] गच्छह्म । ( तथा कुरुतः ) ।

नेपथ्ये । सुखाय वसन्तावतारो भवतु देवस्य । संप्रति हि—

गर्भ-ग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छा-मात्र-परिग्रहः पिक-वधू-कण्ठोदरे पञ्चमः ।

च० त०—नेपथ्ये इति । तिरस्करिण्या बहिद्वाभ्यां वन्दिनोर्वचनमुपक्रमते सुखायेति । वीरुधां लतानां गर्भ-ग्रन्थिषु मध्य-पर्वसु सुमनसः पुष्पाणि । वर्तन्त इति शेषः । अङ्कुराणां मध्ये मध्येऽङ्कुरम् । पल्लवाः किसलयानि वर्तन्ते इत्यनुषङ्गः । पिक-वधूनां कोकिल-स्त्रीणां कण्ठोदरे पञ्चमः स्वरः ध्वनिश्च । वाञ्छा-मात्रेण इच्छा-मात्रेण परिग्रहः अङ्गीकारः यस्य तादृशः सन् वर्तते इत्यूहः । न तु परिणत इति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] प्रणय-प्रणमत्सामन्त-सहस्रकमास्थान-मण्डप-मार्गमुज्झित्वा अनेन गवाक्ष-द्वारेण प्रमोदोद्यानं प्रविश्य गच्छावः ।

आस्थानं सभा । खिडक्किया इति देशीयः शब्दः । खिडकीति महाराष्ट्राः ।

पञ्चमः स्वर-भेदः ।

---

1. V. r. सहस्स-कुलमत्थाणमण्डव—। 2 Cp. SurSC., I. 80.

3. Ghanaśyāma renders this Deśī word into Sanskrit as गवाक्ष । Tad-bhava form of गवाक्ष is गवक्ख ; see PraśVS., 2. 4.

4. Form : PrāV., 8, 2, 4. 5. V. r. मअरंद

6. V. r. आविसीअ ।

तस्मात्[1] त्रीणि जगन्ति जिष्णु दिवसैर्द्वि-त्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यास-वश्यं धनुः[2] ॥२३॥

सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते ।
सहकार-मञ्जरीणां शिखोद्गत[3]-ग्रन्थयः प्रथमे[4] ॥२४॥

राजा । अये ! सुरभेरारम्भः[5] । सैवेयं मन्मथ-सैन्य-सामग्री ।

विदूषकः । बंदि[6]-वअण-सुव्वमाण[7]-सिसु-भावो उअवण-

च० त०—तस्मादिति । यस्मात् सुमनसः पल्लवाः पञ्चमश्चेति कार्य-त्रयमुदेति तस्मादित्यर्थः । देवस्य मनोजन्मनः स्मरस्य चिरोज्झितमपि । त्र्यम्बक-कृत-शासनादारभ्य इति भावः । धनुः । अभ्यासा-धीनं भवेच्चेत् । द्वि-त्रैर्दिनैः जगन्ति भुवनानि जिष्णु जयन् भविष्यतीति शेषः । तथा च "वसन्ते पुष्प-समय" इत्यमरोक्त्या[8] मदनस्य पुष्प-धन्वत्वात् कुसुमेषुत्वाच्च संप्रत्येव त्रैलोक्य-जयो युक्त इति भावः ॥२३॥

निभृतम् अप्रकटं यथा तथा । सपदि शीघ्रं त्रातुम् । प्रथमे आद्याः सहकारस्य आम्र-तरोः मञ्जरीणां साद्य-कर्तुश्चेति भावः । शिखोद्गताः अग्र-सम्भूताश्च ते ग्रन्थयः पर्वाणि एक-देश इति यावत् । भज्यन्ते शीतोपचार-विषये इति भावः ॥२४॥

अये आश्चर्य-खेदयोः । सुरभेः वसन्तस्य । सामग्री पदार्थ-पौष्कल्यम् । वसन्तस्योद्दीपकत्वादिति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] वन्दि-वचन-श्रूयमाण-शिशु-भावः उपवन-

---

1. V. r. किं च
2. M. Sārdūla-vikrīḍita
3. V. r. द्रुम
4. Repeated in BR, 5. 41, p. 165. M. Āryā.
5. V. r. सुरभि-समयारम्भः ।
6. Alt. form : बंदिण, see SamarK, p. 576.
7. For the transformation of श्रु into सुव्व, see PPr., 8. 56-57, pp. 239-240 ; PrāV., 8. 4. 241-242, pp. 130-131. For further use, see SetB., 2. 10 and 9- 46. Other śānac forms : सुणमाण, सुणेमाण
8. 1, 3, 18. p. 22.

दीसंत[1]-त्थोअ[2]-वित्थारो[3] सुरहि[4]-समयारंभो[5] । ता किं ण वण्णिज्जइ[6] । किं णेदमणवरद-सारणी[7]-मेअ-सुकुमारासु केलि-वण-वसुंधरासु अकहिद-वित्थारी[8] सुरभि-समयारंभः[9] ।

राजा । ततश्चात्र[10] ।

च० त०—अनवरतं सन्ततम् । सारण्यः । कालवे इति महाराष्ट्राः[11] । अकथितः सहज एव विस्तारी विस्तारवान् ।

ततः सेकानुकल्पान् । च-कारोऽलंकारार्थः । अत्र क्रीडा-वन-भुवि ।

प्रा० प्र०—दृश्यमान-स्तोक-विस्तारः सुरभि-समयारंभः । तस्मात् किं न वर्ण्यते ।

---

1. दीस from दृश् ; PrāV., 8. 3. 161 "दृशि-वचेर्डीस-डुच्च" । Other present passive participial forms of दृश् : दिस्समाण, दीसमाण । Further use : GatŚS, g. 73.

2. Further use ; VeṇSaṃh., p. 24. Other forms ; थोअ, थोव, थोवाग, थोक, थेव ; see PrāV., 8. 2. 125 p. 57; GātŚS., 49 ; OghaN., g. 259 ; ŚrāPSV., g. 27 ; etc.

3. For the form, see PrāV., 8.4. 395, p. 160; Cp. AŚ., NSP., p. 9.

4. From सुरभि, acc. to the sūtra ख-घ-थ-ध-भां हः, PPr., 2. 26 ; cp. PrāV., 2. 155, p. 61 ; PāiLNM ; KarMañ ; RaṃMañ. सुरभि also found ; e. g. KummāC., p. 14.

5. PrāV., 8, 1. 30, वर्गेऽन्त्यो वा, p. 61. A. r. त्ति

6. वण्णिज्जइ omitted in some MSS. SiriK., 1288. वण्णिअइ in Apa. ; PraV., 4. 345, p. 149.

7. Further uses : KumPra., p. 58 ; ṚṢPañ., p. 29.

8. V. r. अथिक-वित्थारी ।

9. As the Prā. Pra. does not touch this passage and the Ca. Ta. explains it, probably the commentators got it in Sanskrit.

10. V. r. ततश्च ।

11. Moles., Kālavā (San. कुल्या), p. 161.

साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकै-
र्बाह्लीकी-रदन[1]-च्छदारुणतरैः पत्रैरशोकोऽचितः[2] ।
भृङ्गी-लंघित[3]-कोटि किंशुकमिदं किंचिद्विवृन्तायते
माञ्जिष्ठैर्मुकुलैश्च[4] पाटलि-तरोरन्येव[5] काचिल्लिपिः[6] ॥२५॥

(विचिन्त्य)

च०न०—विचकिलं बट्टमोगरा[7] इनि महाराष्ट्राः । बाह्लीकी बाह्लीक-देश-स्त्री तस्या रदन-च्छदः अधरस्तद्वत् । वाह्लोकीति कवेः प्रमादः, "शोणोऽधरो बाह्लिकोनामि"ति वस्तु-निर्णयात् । "कांभोजा बाह्लिका" इत्यमरोक्तेश्च[8] । अंचितः संगतः । भृङ्गीभिः मधु-करीभिः । लंघिता कोटिः अग्रं यस्य तत् । किंशुकस्य पुष्पं किंशुकम् । किंचित् ईषत् । विवृंतायते "वृंतं प्रसव-बंधनमि"त्यमरः[9] । पाटलि-तरोः पाटलि-वृक्षस्य च मांजिष्ठैः । "मांजिष्ठं पीतमि"ति केदारः । मुकुलैः कुड्मलैः साधनैः । अन्या जगद्-विलक्षणा । काचिद् वाचयितुमशक्या लिपिरिव वर्तत इति शेषः । घुणाक्षर-न्याय[10]इति भावः ॥२५॥

प्रा० प्र०—विचकिलं मल्लिका-पुष्पम् । माञ्जिष्ठैः पीत-वर्णैः ॥२५॥

---

1. V. r. दशन
2. V. r. रशोकश्चितः
3. V. r. भृङ्गालङ्घित
4. V. r. माञ्जिष्ठ-स्तवकैश्च
5. V. r. रन्यैव
6. M. Śārdūla-vikrīḍita.
7. Moles., मोगरा, p. 667.
8. II, 8, 46, p. 129. Other forms of Vāhlika : Balhika, Bālhīka.
9. II, 4, 15, p. 55.
10. For this maxim, Cp. GRM, iii. 195; PR., p. 9; RT., iv. 167; SV., iii. 58

सा कापि स्वप्न-विधा दृष्टा च मधुश्च यत् समायातः ।
तदिदं मम लीढ-मधोरनुपानं तप्त-दुग्धेन[1] ॥२६॥

विदूषकः । ( परिक्रामितकेन— ) कलम[2]-कूर[3]-उक्कर[4]-पंडरेसुं सिंदुवार-मंजरी[5]-पुंजेसुं[6], तक्काल-कप्पित-घिअ[7]-मंजिट्ठेसुं असोअ-त्थवएसुं[8], निज्जिद-मंजिट्ठ-मसूर[9]-मण-

च० त०—मधुर्वसन्तः । समायातः प्राप्त इति यत् तदिदं तदेतत् । लीढः पीतः मधुर्मद्य[10] येन तस्य मम तप्त-दुग्धेन कदुष्ण-क्षीरेण अनुपानं संजातमिति शेषः । तथा च दृष्टा-बलस्य मे वसंतागमनमुद्दीपकतममिति भावः ॥२६॥

भक्ष्य-पदार्थोपमानैः साकमुपमेयं तरु-लता-जालं वर्णयति—कलमेति । "सिन्दु-वारेन्द्रसुरसावि"त्यमरः[11] । तत्-काल-कल्पित-घृतं सद्योघृतमित्यर्थः । मुसूराश्च इति श्रुतिः ।

प्रा० प्र०—मधुरिति मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः, अर्धर्चादि-गणे पाठात् । "पुं-नपुंसकयोर्मध्वि"ति मुकुटः ॥२६॥

परिक्रामितकेन कतिपय-पद-संचारेणेत्यर्थः ।

[ संस्कृतच्छाया—विदूषकः ] कलम-कूरोत्कर-पाण्डरेषु सिन्दुवार-मञ्जरी-पुञ्जेषु, तत्काल-कल्पित-घृत-माञ्जिष्ठेषु अशोक-स्तबकेषु, निर्जित-माञ्जिष्ठ-मसूर-मनो—

---

1. M. Āryā.

2. V. r. कलमंकूर-कुपंड-पंडरेसु । Nārāyaṇa, commentator of the VŚB, reads "कलम-कूर-कुपंड-पाण्डरेसु" and says. "कलम-कूरः शाल्योदनं कुष्माण्डानि च तद्वत् पाण्डरेषु" । For कलम, see PāiLNM, v. 256, p. 48 : JamDP., 2.

3. Cp. DeśiNM., 2. 43.

4. Cp. KumPC., 1. 41, p. 20 ; 5. 18, p. 148. Alt. form उक्केर ।

5. Alt. forms : मंजरिआ (KumPC., 3. 65, p. 102) and मंजरि (AupS).

6. V. r. सित-सिंदुवार-पुप्फेसुं ।　　7. V. r. तक्काल-किद ।

8. V. r. पल्लवेसुं ।　　9. V. r. धूसरित ।

10. See Pāṇini, 2. 4. 31 ; SidKau., 816, अर्धर्चाः पुंसि च, p. 188 ; see also परिशिष्ट, p. 714 ; cp. AK, 3. 5. 36, p. 238.

11. II. 4. 69, p. 65.

हरेसुं, माहवी-कुसुमेसुं, दधि-सरिच्छेसुं[1] णोमालिआ-मुउलेसुं, दरावत्तिद[2]-दुद्ध-मुद्धेसुं विचइल-उप्फुल्ल[3]-पुप्फेसुं, णीसेस-पसव[4]-संपदं वज्जीअ उवमाणेसुं सज्जदि[5] मे दिट्ठी[6] ।

राजा । अत्र हि किलोचितोपमानाभिनिवेशिनी[7] ते जिह्वा ।

विदूषकः । ( अग्रतो निर्दिश्य ) रंगंगणं लदा-णच्चकीणं,

च० त०—मसूरा इति महाराष्ट्राः[8] । "वासन्ती माधवी लते"त्यमरः[9] । (लवाः लेशाः शकला इति यावत् । एतेन अतिनैविड्यं सूचयते । अत एव मुकुलेष्विति निर्देशः । ?) दरमीषत् । "आवर्तितं तु कथितमि"ति विश्वः । उत्फुल्लानि विकसितानि च तानि [पुष्पाणि च] । "प्रसवः पत्र-पुष्पादावि"ति शब्द-माला । उपमानेषु अन्न-प्रमुख-पदार्थेषु इत्यर्थः । सज्जति सज्जा भवति । भक्षणायेति भावः ।

अत्र उपमानोपमेयानां मध्ये । अभिनिवेशिनी आसक्तिमती ।

निर्दिश्य दर्शयित्वा । "रङ्गो नाट्य-स्थल" इति बलभद्रः ।

प्रा० प्र०—हरेषु माधवी-कुसुमेषु, दधि-सदृक्षेषु नव-मल्लिका-मुकुलेषु, दरावर्तित-दुग्ध-मुग्धेषु विचकिलोत्फुल्ल-पुष्पेषु, निःशेष-प्रसव-संपदं वर्जयित्वा उपमानेषु सज्जति मे दृष्टिः ।

क्रूरोत्करोऽन्नराशिः । "क्रूरमन्नं खलः क्रूर" इति नानार्थ-मञ्जरी । क्रूरेति गुर्जराः । निर्जित-माञ्जिष्ठ-मसूराणि च तानि मनोहराणि चेति बोध्यम् । पुप्फमित्यत्र "ष्पस्य फ" इति फत्वम् । पुल्लमिति पाठेऽपि पुष्प-वाचक एव देशीयोऽयं शब्दः ।

[ संस्कृतच्छाया—विदूषकः ] रंगांगणं लता-नर्तकीनां,

---

1. Nārāyaṇa reads दधि-सर सरिच्छेसुं and explains, दधि-शर-सदृक्षेषु दध्नः शर उपरितनो भागः तत्-सदृशेषु । 2. V. r. दरावड्ढिद ।
3. Further uses : PāiLNM., v. 82, 29 ; SetB., 6. 96. This word is not found in some MSS.
4. V. r. कुसुम 5. V. r. भममाणा संसज्जदि ।
6. Cp. KM., I. 19, pp. 14-15, Viduṣaka, etc.
7. V. r. उपमान-निवेदिनी
8. Moles., p. 636. 9. II. 4. 15, p. 55.

वाहिआली[1] मलआणिल-तुरंगम्स, [2]वारि-[3]त्थाणं[4]वंमह[5]-मह[6] वारणस्स[7], संकेद-सदणं णीसेस-कुसुमाणं, पीऊस-वरिसं[8] हिअअस्स पमदुज्जाणं। ता इमं निव्वणअंतो इदो एदु पिअ-वअस्सो।

राजा। ( पवन-स्पर्शमभिनीय— )

ये दोला-केलि-कारा मनसि[9] मृग-दृशां मान-तन्तुच्छिदो ये
सद्यः शृङ्गार-दीक्षा-व्यतिकर-गुरवो ये च लोक-त्रयेऽपि।

च० त०—निर्वर्ण्यन् पश्यन्। "निर्वर्णनं तु दर्शने"त्यमरः[10]। राजा द्वाभ्यां पवनं वर्णयति—य इति। यच्छब्द-त्रयेण समीराः परामृश्यंते। ये

प्रा० प्र०—वाहिराल्ली मलयानिल-तुरङ्गस्य, वारि-स्थानं मन्मथ-महा-वारणस्य, सङ्केत-सदनं निश्शेषकुसुमानां, पीयूष-वर्षं हृदयस्य प्रमोदोद्यानम्। तस्मादिदं निर्वर्णयन्नित एतु प्रिय-वयस्यः।

**वाहिआलीति** वाजि-स्थान-वाचको देशीयः शब्दः। वाइ-सालेति पाठे वाजि-शालेत्यर्थः। **वारीति** "वारी तु गज-बन्धनी"त्यमरः। **वंमह** इत्यत्र "मन्मथे वः" इति वत्वम्। **उज्जाणमित्यत्र** "त्य-थ्य-द्यानां च-छ-जा" इत्यनेन ज-कारादेशः।

---

1. Also found in SamarK, p. 13, l. 2 and SupāsCar., p. 327. Sans: Vāhyālī. Alt. form: वाहियाली।

2. V. r. पारद्धिरण्णं वम्मह-वाहस्स i. e. पारर्ध्यरण्यं मन्मथ-व्याधस्य। पारधिं, also पारर्धी, is the tad-bhava form of पापर्धि meaning chase, hunting; see PrāV., 8. 1. 235, p. 35; KumārPC., 2. 55, p, 60; UpadP., p. 257; SupāsCar., p. 216.

3. See PāiLNM., v. 28; SamarK., pp. 277 and 678.

4. Other Prākṛta forms: ठाण, थाण; see PrāV., 8. 4. 16; VisBhāṣ, gāthā, 1856; UpadP., p. 332; SūagaS., 1. 11; etc.

5. See PPr., 2. 40, p. 49 and 3. 43, p. 78; PrāV., 8. 1 242, p. 36 and 8. 2. 61, p. 48, PāiLNM., v. 7, p. 21; also PrākLak. Also वम्मथ found.

6. Also महा।

7 See PāiLNM., v. 9, p. 21; cp. KumārC., 1. 34, p. 18 and 2. 22, p. 47.

8. V. r. वरिसी। For वरिस from वृष्, see PPr., 8. 11, p. 222; PrāV., 8. 4. 235.

9. V. r. किमपि

10. AK III. 2. 31, p. 187, "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्"।

ते कण्ठे लोलयन्तः[1] परभृत-वयसां पञ्चमं राग-राजं
वान्ति स्वैरं समीराः स्मर-विजय-महा-साक्षिणो दाक्षिणात्याः[2] ॥२७॥

च० न०—मृगाणामिव मृगा इव वा दृशो यासाम्। "मृगस्य मृगवच्च वेत्यक्षि वर्ण्यमि"ति कल्प-नरो नाथाग्रज-चरणाः[3]। किमपीति भ्रान्तः पाठः। मनसीति सुपाठः। तस्मिन् मनसि दोला-केलिं कुर्वन्तीति दोला-केलि-काराः। प्रियो वन्द्यतां वा वन्द्यतां वेति चांचल्य-रूपा दोलेति भावः। तदिदं "दोला-कर्म वितन्वन्ति मनांसी"ति नाथ-चरण-व्याख्यान-भोज-चम्पू-छायानुसरणमित्यूह्यम्। डोलेति संस्कृत-कवेः प्रमादः। "दोला-दशन-दण्डेषु ड" इति प्राकृत-व्याकरणे वररुचिना डत्व-विधानात्[4]। अत एव सद्यस्तत्क्षणम्। ये, मृग-दृशामिति काकाक्षि-न्यायेनोभयत्र[5] योज्यम्। मानोऽहङ्कारः स एव तन्तुः सूत्रं तन् छिन्दन्तीति तन्तुच्छिदः। मलयानिल-वलन-सूचनादुदयो भविष्यतीति मृग-दृशः स्वनो मुक्त-मानाः पत्यनुकूला भवन्तीति भावः। मान-तन्तु-च्छिद इति ध्वनिः। व्यतिकरे संबन्धे। ते, परैः काकैः भृतानि च तानि वयांसि पक्षिणः तेषां कोकिलानाम्। "वयः पक्षिणि बाल्यादावि"ति रभसः।[6] कण्ठे राग-राजं राग-श्रेष्ठं पञ्चमं पञ्च-माख्यम्। "पिकः कूजति पञ्चममि"त्यमर-शेषः[7]। लोलयंतः संचारयंतः। स्मरस्य विजये महान्तः प्रामाणिकाश्च ते साक्षिणः। "साक्षी प्रामाणिको मत" इति धर्म-शास्त्र-स्मरणात्। दाक्षिणात्याः 'दाक्षिणात्योऽयं यस्तु दक्षिण-दिग्-भव" इति वैजयन्ती[8]। समीरा वायवः स्वैरं यदृच्छया वान्ति। ध्वनिश्च ॥२७॥

---

1. V. r. लोडयन्तः 2. M. Sragdharā.

3. i. e. Cidambara Brahmacārin. See f. n. 8, p. 25 ; also Introduction.

4. PPr., 2. 35. The reading in the eds. of Vaidya (p. 36) and Caṭṭopādhyāya (p. 48) "दोला-दण्ड-दशनेषु डः"। Cp. PrāV., 8. 1. 217, p. 33 ; PāiLNM. ; in the sense of palanquin :DeśīNM., 4. 11, p. 161.

5. For this maxim, cp. Bra.'s comm. on Sva.'s HYP., 4. 10 ; AG.'s comm. DAL. on DA. of AV., 3. 1 ; KāmNS., 1. 24.

6. The work is probably no more in existence.

7. Not found in the Tri-kāṇḍa-śeṣa ; cp. AK., 1. 6. 1. p. 31. This Amara-śeṣa has been frequently quoted by our commentators ; but the quotations are not traceable in the TŚ.

8. Not traced in the V. of Yādavaprakāśa, Oppert's ed.

अपि च—

सुरत-भर-खिन्न-पन्नग-विलासिनी-पान-केलि-जर्जरितः ।
पुनरपि विरहि-श्वासैर्मलय-मरुन्मांसलो भवति[1] ॥२८॥

विदूषकः । [2]एव्वं एदं ।

लंका-तोरण-मालिआ-तरलणो माणोसहं सिंघली-
संघाणं दविडीण वम्मह-महा-लासेक-णट्टावओ ।

च० न०—सुरत-भरेण ऊर्ध्वीभूय मिथः संघर्षण-वेष्टनादि-रूपेण रतातिशयेन । खिन्नाः आयस्ताश्च ताः पन्नग-विलासिन्यः सर्पाङ्गनाः । तत्-कृतया पानक्रीडया जर्जरितः संजात-जर्जर-गुणः कृशतर इति यावत् । पन्नग-जातेः पवनाशनत्वादिति भावः । "विला-सिनी भामे"त्यमर-शेषः । विरहिण्यश्च विरहिणश्च विरहिणः तेषां वियोगिनां श्वासैः मलय-मरुत् मलय-पवनः । मांसलो बलवान् । पुष्टीभवतीत्यर्थः । विष-धराणां भोजन-शेषतया विरहाग्नि-सन्तप्तानाम् उष्ण-श्वासैरधिकी-कृततया च चन्दनाद्रि-पवनो मे दुःसहतर इति भावः ॥२८॥

विदूषकश्चानिलं वर्णयति—लङ्केति । लङ्कायास्तोरण-मालिकानां बहिर्द्वारालङ्कार-माल्यानाम् । अथवा सूत्र-गुम्फिताम्र-दल-पंक्तीनाम् । तरलनं कम्पनं यस्मात् । मानौषधं मान-मोचनौषधमित्यर्थः । मन्मथस्य महा-लास्ये महा-नाट्ये सुरत इति यावत् एक-

प्रा० प्र०—जर्जरितः कृशतरः ।

[संस्कृतच्छाया—विदूषकः ] एवमेतत् ।

लङ्का-तोरण-मालिका-तरलनो मानौषधं सिंहली-
संघानां द्रविडीनां मन्मथ-महालास्यैक-नर्त्तापकः ।

1. V. r. मांसलीक्रियते । M. Āryā.	2. V. r. एवं णेदं [?]

कण्णाडी-कुरलालि[1]-तंडव-अरो लाटीण लीला-गुरू

उम्मत्तो महरट्ठि-वड्ढिद-मणो[2] चेत्ताणिलो वड्ढदि[3] ॥२९॥

( संस्कृतमाश्रित्य )

इह हि नव-वसन्ते मञ्जरी-पुञ्ज-रेणु[4]

च्छुरण-धवल-देहा बद्ध-हेलं चरन्ति[5] ।

च० न०—नर्तकः मुख्य-सूत्र-धारः। वंमहेत्यत्र "मन्मथे व[6]" इति वत्वम्। "कुरला भालगाः कचाः" इति वैजयन्ती[7]। "कुरलकेसः" इति महाराष्ट्राः[8]। लीलायां विलासे। उन्मत्त इव सर्वशः सञ्चारीत्यर्थः। "मलये मास-भेदे च चैत्र" इत्यच्युतः[9]। वड्ढ इत्यत्र "वृधेर्वड्ढ"[10] इति वड्ढादेशः।।२९।।

अथ कविरग्रे "तुमं वो"ति विदूषकेण राज-परिहास-करणाय संस्कृतमाश्रित्येति चमत्कारेति बोध्यम्।

इह अस्मिन् नव-वसन्ते वसन्तारम्भे। मञ्जरीणां सिन्दुवारस्येत्यर्थात् सिद्धम्। पुञ्जाः राशयस्तेषां रेणुभिः अङ्ग-लग्न-धूलिभिः छुरणेन विद्योतनेन धवला देहाः येषाम्।

प्रा० प्र०—कर्णाटी-कुरलालि-तांडव-करो लाटीनां लीला-गुरु-
रुन्मत्तो महाराष्ट्री-वर्धित-मनाश्चैत्रानिलो वर्धते ॥४॥

कर्णाटीति कन्नड-स्त्री। "कानडे" इति महाराष्ट्रा वदन्ति। महरट्ठीति "अपि माषं मषं कुर्याच्छन्दोभङ्गं न जातुचिदि"ति कवि-समयात् ह-शब्दे ट्ठि-शब्दे च ह्रस्वता। तथाच महाराष्ट्रीणां वर्धितं मनः येनेति महाराष्ट्रीभिर्वर्धितं मनः यस्मिन्निति वा बोध्यम्। महरट्ठ

1. V. r. चिउराए 2. V. r. लुंडिद-मणो 3. V. r. णच्चदि 'M. Śārdūlvikrīḍita' 4. V. r. रेणु-पुञ्ज 5. V. r. सरन्ति

6. PPr., II, 40, p. 49 ; cp. PrāV., 8. 1. 242, p. 36 ; PāiLNM. Alt. form : वम्मथ।

7. Cp. Vaij. of YP., p. 181, v. 99, "ते [ कचाः ] ललाटे भ्रमरकाः कुरुला भ्रमरालकाः" ; AKU of KS. on AK II. 6. 96 "कुरलाश्च", p. 106, l. 3 from the bottom. 8. Moles., p. 174.

9. This lexicographical work is probably lost for ever.

10. PPr., 8. 44, p. 235 ; cp. PrāV., 8. 4. 220, p 128 "कथ-वर्धां ढः". Cp. also KālĀK., index.

तरलमलि-समूहा हारि-हुंकारि-कण्ठा
बहुल-परिमलाली-सुन्दरं[1] सिन्दुवारम् ॥३०॥

राजा। (किञ्चिद्विहस्य) सखे! संस्कृतेऽपि प्रगल्भसे।

विदूषकः। तुमं वि अह्मारिस-जण-जोग्गे पाउद-मग्गे णिपडिदोसि[2]। ता एहि फलिह-सिला-मंदिरं महा-मंति-कारिदं[3] केलि-केलासं पेक्खिदुं गच्छह्म (इति परिक्रामतः)।

च० त०—हारिणः मनोहराश्च ते हुंकारि-कण्ठाः। अलिनाम् अलीनां वा "भ्रमरोऽलिरली"ति धनंजयः[4] समूहाः। तरलं चञ्चलम्। पवन-वशादिति भावः। बहुलाश्च ते परिमलास्तेषाम् आलोभिः पंक्तिभिराधिक्यैरिति यावत्। सुन्दरं रम्यं सुन्दरवदाश्रयणीयं वा। "बहलं बहुलं बह्वि"ति त्रि-रूपः। सिन्दुवार-तरुं "गन्धाढ्य इन्द्रसुरसः सिन्दुवारश्चे"ति धन्वन्तरिः[5]। उद्दिश्येति शेषः। बद्ध-हेलम् अशिथिल-विलासं यथा तथा चरन्ति सञ्चरन्ति। हि प्रसिद्धौ। भ्रमराणां कुसुमातिथित्वादिति भावः ॥३०॥

प्राकृत-मार्गे प्राकृतैः विटैरनुसार्य-मार्गे स्त्र्यादि-विषय-मार्गे इति परिहासोक्तिः। प्राकृतानां वा। केलयः निरुपम-लीलाः कैलास इव यस्मिन् तत् केलि-कैलासं विश्राम-स्थानम्।

प्रा०प्र०—इति पाठे "महाराष्ट्र्ये महाराष्ट्र" इति द्वि-रूप-कोशः। मह-शब्दस्य उत्सवोऽर्थः। महाराष्ट्र्यश्च महाराष्ट्रास्तेषां वर्धितं मनो येनेत्यस्मदग्रज-चिदंबर-ब्रह्मचरणा वदन्ति[6] ॥२६॥

हारि "मनोज्ञं मनोहरं हारी"त्यमर-शेषः।

[ संस्कृतच्छाया—विदूषकः ] त्वमपि अस्मादृश-जन-योग्ये प्राकृत-मार्गे निपतितोऽसि। तस्मादेहि स्फटिक-शिला-मन्दिरं महा-मंत्रि-कारितं केलि-कैलासं प्रेक्षितुं गच्छावः।

फलिहमित्यत्र "स्फटिक-निकष-चिकुर-शीकरेषु कस्य ह" इति हत्वम्[7]। केलि-कैलासमिति स्थान-विशेषः।

---

1. V. r. सिन्दुरं

2. V. r. पउत्तोसि [ प्रवृत्तोऽसि ]। 3. V. r. महा-मंति-कारिदं precedes.

4. Not found in Dhanañjaya's Nāma-mālā

5. DN., p. 150, सिन्दुवार। Cp. AK., II. 4. 69, p. 65, "सिन्दुवारेन्द्र-सुरसौ," etc.

6. Cidambara, elder brother of Ghanaśyāmā, has been referred to several times by Sundarī and Kamalā as well. 7. ppr., 2, 4, p. 35.

विदूषकः । कहिं उण कोंची-केंकार-सुन्दरो सद्दो[1] ।

राजा । ( समाकर्णयंस्तदनुसारेणोर्ध्वमवलोक्य )

उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-

गनाकाशे कोऽयं गलित-हरिणः शीतकिरणः ।

समाबद्ध[2]-ग्रासैरुपवन-चकोरैरनुसृतः[3]

किरञ्ज्योत्स्नामच्छां नव-लवलि[4]-पाक-प्रणयिनीम् ॥३१॥

विदूषकः । कहिं सो[5] ।

राजा । अयमयम् ( स-विस्मयमवलोक्य ) कथं न दृश्यते, किं पुनरिदम् । ( वितर्क्य )

दोला-स्थित-विरह-शुभ्र-मृगाङ्कावली-मुखमुल्लिखति उपेति । उपप्राकाराग्रमित्येकं पदम् । प्राकाराग्रंचरी[6] इति महाराष्ट्राः । तस्य उप समीपे । नयने लोचने । कर्म । प्रहिणु प्रेरय पश्येति । अनाकाशे नीलं नभ इति प्रतीतेराकाश-व्यक्ति-वित्त-स्थलेतर-प्रान्ते । नवश्चासौ लवलेः पाकः पत्र-पक्वता तस्याः प्रणयिनीं सखीं शुभ्रामिति यावत् । "लवली लवलिस्तथे"ति द्वि-रूपः । "रायअवली" इति महाराष्ट्राः[7] । अच्छां निर्मलां ज्योत्स्नां किरन् प्रसारयन् । समावद्धाः सम्यक् आबद्धाः आशया धृताः ग्रासाः कवल-बुद्धयो यैः । चकोरैरनुसृतः । गलित-हरिणः मुक्त-मृगः । निष्कलङ्क इति यावत् । कोऽयं शीतकिरणश्चन्द्रः । इतेरध्याहारः । मनागीषत् सामान्यत इत्यर्थः । तर्कयेति । ननु चकोरानुसृतत्वात् ज्योत्स्ना-प्रकाशकत्वाच्च चन्द्र एव, आकाश-हरिण-विमुक्तत्वान्नायं चन्द्रोऽपि तस्मात् किमेतत् कुहकमपूर्वम् । इदमित्थमिति ऊहस्वेति भावः ॥३१॥

प्रा॰ प्र॰—[ संस्कृतच्छाया—विदूषकः ] क्व पुनः क्रौञ्ची-केङ्कार-सुन्दरः शब्दः ।
[ संस्कृतच्छाया—विदूषकः ] क्व सः ।

---

1. V. r. सुणीअदि added here. 2. V. r. सुधाबद्ध
3. V. r. रनुसृतां 4. V. r. लवलि-फल 5. V. r. भो वअस्स कहिं सो
6. See Moles., 272—चर । 7. Moles, रायआंवली, p 694.

यन्मञ्जु शिञ्जितमितो रशना-मणीनां
यच्छ्वास-सौरभ-बलादलयो वलन्ते[1] ।
यद्गीतयश्चल[2]दलङ्कृतयश्च लीला-
दोला-विलास-तरलस्तदयं मुखेन्दुः[3] ॥३२॥

च० त०—नायं केवलेन्दुः गुणाधिक्यैर्हेतुभिर्मुखेन्दुरित्युपन्यस्यति—यदिति । यच्छब्द-त्रयस्य यस्मादित्यर्थः । रशनायाः काञ्च्याः मणीनां क्षुद्र-घंटा-मणीनां मञ्जु मनोज्ञं शिञ्जितं स्वनितम् । यद्यपि "भूषणानान्तु शिञ्जितमि"त्यमरोक्त्या[4] मणीनां शिञ्जितमिति कवे-श्चातुर्यं पौनरुक्त्यात्, तथापि "वंश-करीर-नीलैरि"ति माघ[5]-व्याख्यायां पति-पत्नी-करि-कलभादिवत्समतव्यमिति महोपाध्यायाश्चक्रुस्तद्वदत्रापि क्षन्तव्यम् । मञ्जु शिञ्जित-मिति प्रासाशयोक्तमिति केचित्[6] । इतः अत्र । श्रूयत इति शेषः । अलयो भृङ्गाः वलन्ते सञ्चरन्ति । चलन्त्यः स्फुरन्त्यः अलङ्कृतयः तत्तदुचित-कल्पना-सम्पदन्त्याक्षर-नियमार्थ-पुष्टि-शृङ्गार-मङ्गलाशंसा-निजेष्ट-जन-नाम-विन्यसनादि-चमत्कार-रूपा अल-ङ्कारा यासु ताः गीतयश्च । "गतगानी[7]" इति महाराष्ट्रांगनाः । श्रूयन्त इति शेषः । तत्तस्मात् । अयं । चञ्चल-दोलाया विलासैः सुखासिकांदोलनादि-लीलाभिः तरलः चलाचलः । वदन-चन्द्रः । कस्याश्चिदिति शेषः । तथा च यस्माद् एवंविधो रशना-श्वास-गीतीनां विलासस्तस्मादेवायं मुखेन्दुरिति भावः ॥३२॥

---

1. V. r. वदन्ति　　　　2. V. r. यद्गीतयः स्खल

3. Cp. KM., act 2, the King watching Karpūra-mañjarī. M. Vasanta-tilaka.

4. I, 5, 24, p. 30.

5. ŚV., 4. 14.

6. This statement presupposes other commentators.

7. Moles, p. 232.

विदूषकः। किण्णु क्खु एदं[1]। सच्चकं तुए जाणिदं जदो हिंदोलिआ-जुअल[2]-सिहराइं इदो दीसंति।

राजा। ( पुनर्दृष्ट्वा ) सखे! अयमसावाश्चर्यश्चन्द्रमाः।

विदूषकः। णिरणुक्कोसोक्कण्ठलोअणेहिं[3] अह्मेहिं चंदो ग्वे लक्खीयदि[4]।

राजा। ( निपुणं निरूप्य ) सखे! दिष्ट्या वर्धसे, स्वप्न-दृष्ट-जन-मुख-पद्म-संवादिनी लावण्य-लक्ष्मीः।

च० त०—हिन्दोलिकयोः दोला-शृङ्खलयोः। युगलं द्वयम्। तस्य शिखरे अलङ्कार-स्थापितावतंसीभूत-शृङ्गे इत्यर्थः। "हिन्दोलिका दोला-शृंखलयोरि"ति केदारः[5]। हिन्दोलिका-शब्दार्थस्तु चैत्र-शुद्ध-तृतीया-प्रसक्त-दुर्गा-दोलाधिरूढ-गौरी-पूजक-महाराष्ट्राङ्ग-नासु प्रसिद्धो विज्ञेयः।[6]

नितराम् अनुक्रोशोत्कण्ठे दयौत्सुक्ये येषां तादृशानि लोचनानि ययोस्ताभ्यां निरनुक्रोशोत्कण्ठ-लोचनाभ्याम्। आवाभ्यामिति च नाथ-चरणानामभिप्रायः। चन्द्रो मुख-रूपः। खे अवकाशे प्रान्त-विशेष इति यावत्। "खमाकाशावकाशयोरि"त्यगस्त्यः। एतेन "अनाकाशे कोऽयमि"ति पूर्वोक्तस्याविरोधः।

निरूप्य विभाव्य। दिष्ट्या दैवात्। स्वप्न-दृष्ट-जनस्य मृगाङ्कावल्याः।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] किन्नु खल्वेतत्? सत्यं त्वया ज्ञातं यतो हिन्दोलिका-युगल-शिखरे इतो दृश्येते।

सिहराइं इत्यत्र द्वि-वचने बहु-वचनमिति बहु-वचनत्वम्।

[ संस्कृतच्छाया—विदूषकः ] निरनुक्रोशोत्कण्ठ-लोचनैरस्माभिश्चन्द्रः खे लक्ष्यते।

---

1. Not found in some Mss.
2. V. r. हिंदोल-दंडिआ
3. V. r. कधं लुक्कदंसणिआहिं विअ
4. V. r. अम्हेहिं समं खेलदि
5. Cp. KŚ. on AK., II, 8, 54 "प्रेङ्खा हिन्दोलाख्या"।
6. Moles, p. 901,

विदूषकः । आः कीदिसी सा ।

राजा । यादृशी परिपाक-पाण्डुराणां शर-काण्डानाम् ।

विदूषकः । ननु[1] करि-कलभ-दन्तच्छेदेसु वि सा अत्थि ज्जेव । ( विचिन्त्य ) चिर-विरहिअ-[2]हिन्दोलिआ-सद्दत्तणेण जाणि-ज्जदि अवतिण्णा[3] सा हिन्दोलिआए । ता एहि अग्गतो गच्छह्म । ( इति परिक्रामतः ) ।

विदूषकः । एदं[4] तं केलि-केलासं । ता उवसप्पदु[5] पिय-वयस्सो । ( तथा कुरुतः ) ।

च० त०—परिपाके पक्वतायाम् । शराणां कंस इति काण्डानां काण्डीनि च महाराष्ट्राः ।[6] एतेन तस्या विरह-पाण्डिमा लक्ष्यते ।

"लवली-शर-काण्डानां पाण्डुत्वे चोपमानते"ति कवि-समयानुसारेण वर्णयतो राज्ञो भाव-समयानभिज्ञः परिहासेन प्रातिभाव्यमारचयन्नाक्षिपति—नन्विति । शर-काण्डापेक्षया स्थूलतरेषु कलभ-दन्तच्छेदेषु सा लावण्य-लक्ष्मीरस्त्येव । तावता को गुण इति भावः ।

परिक्रामतः सञ्चरतः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] आः कीदृशी सा ?

[ संस्कृतच्छाया—विदूषकः ] ननु करि-कलभ-दंतच्छेदेष्वपि साऽस्त्येव । चिर-विरहित-हिन्दोलिका-शब्दत्वेन ज्ञायतेऽवतीर्णा सा हिन्दोलिकातः ।

हिन्दोलिकेति दोला-वाचको देशीय शब्दः । हिन्दोलेति महाराष्ट्राः ।

[ संस्कृतच्छाया—विदूषकः ] तस्मादेहि अग्रतो गच्छावः ।

[ संस्कृतच्छाया—विदूषकः ] एतत्तत्केलि-कैलासम् । तस्मादुपसर्पतु प्रिय-वयस्यः ।

केलिः कैलास इव यस्मिन् स्थाने तत्केलि-कैलासम् ।

---

1. V. r. no ननु
2. V. r. विरमिद
3. V. r. उत्तीरगणा सा ; no हिन्दोलि-आए ।
4. V. r. इदं
5. V. r. पविसीअदु
6. Moles., p. 152.

राजा। उद्दण्ड-हिण्डीर-पिण्ड-परिपाण्डुरेण महसाऽति-कैलासमेवेदम्।

विदूषकः। पिअ-वयस्स[1]इदो दाव आलिखिद[2]-फलिह-गब्भ-भवण-भित्ति-चित्त-कम्मम्मि[3] णिवेसीअदु दिट्ठी। एस दाव देवो देवीए समं वासगाहिणिवेसी[4] आलिहिदो। एसावि तंबुल-करंड-वाहिणी णाअवल्ली। एसावि[5] चामर-ग्गाहिणी पभंज-णिआ। एसोवि जल-कमंडलुओ[6] णाम वामणओ। एसोवि[7]

च० त०—उद्दण्डः अधिकश्चासौ हिण्डीराणां पिण्डो गोलः। ध्वनिश्च। महसा तेजसा हेतुनाऽतिक्रान्त-कैलासमित्यर्थः। तस्य रजताद्रित्वेन शुष्क-पत्र-कान्तिकत्वादिति भावः। देवः भवान्। "केली-शय्योज्ज्वलो वासो वासक" इति रत्न-माला। करण्डो नाम वर्तुला-कार-संपुट-वाचको देशीयः शब्दः। करण्डा इति डबा इति महाराष्ट्राः[8]। मन्दुरायाः वाजि-शालायाः। एष मर्कटः।

प्रा० प्र०—"हिण्डीरोऽब्धि-कफः फेन" इत्यमरः[9]।

[ संस्कृतच्छाया—विदूषकः ] प्रिय-वयस्येतस्तावद् आलिखित-स्फटिक-गर्भ-भवन-भित्ति-चित्र-कर्मणि निवेश्यतां दृष्टिः। एष तावद्देवो देव्या समं वासकाभिनिवेशी आलिखितः। एषापि ताम्बूल-करण्ड-वाहिनी नागवल्ली, एषापि चामर-ग्राहिणी प्रभञ्जनिका, एषोऽपि जल-कमण्डलुको नाम वामनः, एषोऽपि

---

1. V. r. no पिअ-वयस्स।
2. V. r. ललिअ
3. V. r. संट्ठेसु कम्मेसु।
4. V. r. पासआहिणिवेसी
5. V. r. no वि
6. V. r. णअरकंडओ [ नगरकण्टकः ]; रअणकरंडओ [ रत्न-करण्डकः ]
7. V. r. एसो उण
8. Moles., p. 350.
9. II, 9, 105, p. 157.

मंदुरा-मक्कटो टप्परकण्णो[1] णाम ।

राजा । सखे ! त्वमेषोऽभिलिखितः ।

विदूषकः । ( स-क्रोधम ) णाहं जाणिदो आलिहिदुं[2] । बम्हणी जाणादि जादिसोहं, सा मां भणादि तुमं पच्चक्खो काम देवो त्ति[3] ।

राजा । अये[4] किमुपवने शुको वदति ।

विदूषकः । किं विअ ।

राजा । अस्ति भवान् देवः, किं पुनर्भृङ्गरिटिः[5] ।

च० त०—नाहमिति कोटिप्वहमित्यर्थः । त्वमेव ज्ञातो महाराजत्वादिति भाव-गर्भः परिहासः ।

अये इति विदूषकं प्रति सम्बोधनम् । शुक इति भाषा-व्यवहार-दक्ष इति बोध्यम् ।

भृङ्गरिटिः त्रिपदः सर्वाङ्ग-वक्रस्त्वमिवेति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया – विदूषकः ] मन्दुरामर्कटटप्पर-कर्णो नाम ।

भुग्न-वाचकोऽयं टप्पर-शब्दो देशीयः ।

[ संस्कृतच्छाया—विदूषकः ] नाहं ज्ञात आलिखितुं, ब्राह्मणी जानाति यादृशोऽहम् । सा मां भणति त्वं प्रत्यक्षः कामदेव इति ।

[ संस्कृतच्छाया—विदूषकः ] किमिव ?

भृङ्गरिटिरिति वैरूप्याशयेन परिहासोक्तिः ।

---

1. For टप्पर, see DeśiNM., 4, 2 ; SupāsCar., (Benares, 1918-1919), p. 520

2. V. r. लिहिदुं जाणिदो

3. V. r. पच्चक्खको देवो त्ति　　　　4. V. r. no अये

5. Also called भृङ्गरिट, भृङ्गरिटि ; vide त्रिकाण्ड-शेष, रिटिस्तवसौ । भृङ्गरिटः शलो भृङ्गी नाडीदेहोऽस्थिविग्रहः, 1, 1, 4 8, p. 256, of Viṣṇudatta Śarman's ed.

विदूषकः। को दुज्जण-वअणाणं कण्णं देइ। ( अङ्गुल्या निर्दिशन् ) एसा उण सोहा-समुदयेण उवहसंती देवीं[1] कावि अपुव्वा आलिहिदा[2]।

राजा। इयमपूर्वैव किं पुनरस्माकं[3] न पुनरनङ्गस्य। (सम्यग् विलोक्य) सैवेयमस्मन्मनः-सारङ्ग[4]-शशि-लेखा। अहो रूप-संपदेतस्याः।

चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रं शशी
भ्रू-सूत्रस्य सनाभि मन्मथ-धनुर्लावण्य-पण्यं वपुः।

च० त०—शुक-व्याजाद्राजानं प्रति दुर्जनत्व-निर्देशः। "समुदायः समुदय" इत्यमरः[5]।

"अपूर्वन्तु मनोहर-नवीनयोरि"ति नामनिधानम्। मकरध्वजस्य रतिरेव योग्या नेयमित्यर्थः। तथा च रतिरस्याः पुरः कियतीति भावः।

चित्र-लिखितां मृगांकावलीं वर्णयति—चक्षुरिति। सुतनोरित्यस्य सर्वत्र यथोचितमनुषङ्गः। चक्षुः कर्तृ। मेचकमम्बुजम् इन्दीवरं कर्म। "नील-नलिनाभमि"ति जयदेवः। "नील-नीरजे"ति क्षेमचन्द्रश्च। विजयते जयति। भ्रूरेव सूत्रम्। प्रमाण-बद्ध-सूत्राकार-परिणत-भ्रूव इत्यर्थः। धनुः सनाभि "सपिण्डास्तु सनाभय" इत्यमरः[6]। वपुः लावण्यस्य पण्यम् "विपणिः पण्यवीथिके"त्यमरः[7] (?)।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] को दुर्जन-वचनानां कर्णं ददाति। एषा पुनः शोभा-समुदयेनोपहसन्ती देवीमपूर्वा कापि आलिखिता।

किं पुनरिति न किमपि फलमिति काकुः। नेति अनङ्गत्वादिति भावः। सारङ्गश्चकोरः। "मृगे चकोरे सारङ्गः पातके शवलेऽपि चे"ति यादवः।

मेचकं श्यामं, सनाभि समानमिति यावत्।

---

1. V. r. विम्र।
2. V. r. देवीं अपुव्वा कावि अहिलिहिदा।
3. V. r. अपूर्वैवास्माकं
4. V. r. सागर
5. II 15, 41, p. 90.
6. II. 5. 33, p. 96.
7. II. 2. 49, p. 49.

रेखा[1] कापि रदच्छदे च सुतनोर्गात्रे च तत्-कामिनी-
मेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्यसम्यग्यति ॥३३॥

विदूषकः । (स्व-गतम्) का उण एसा देवी-परिवारे । (विचिन्त्य) भोदु, कोदूहलेण देवी ओल्लागदं[2] णिअ-माउल-भावुअं[3] मिअंकवम्माणं वारंवारेण विरइद-महिला-वेसं कारेदि[4] ।

च० त०—रदच्छदे अधरेऽपि । कापि अतिसूक्ष्मा रेखा विभजन-साधन-रूपा । अधरस्य लम्बत्व-गन्धोऽपि नास्तीति भावः । अत एव अधरोष्ठ-विभाग-रेखिका सुदृशोऽस्या वदनेऽस्ति वा नवा" इति-नाथ-चरण-व्याख्यात-भारत-चम्पौ । सुतनोर्गात्रे सर्वावयव-समष्टौ वपुषि च । कापि अनिर्वाच्या रेखा वर्तते इति शेषः । "रेखा-संख्यान-सौष्ठवमिति विक्रमार्कः । "वोवि" इति महाराष्ट्राः । तत् तस्मात् । यदि चेत् वैदग्ध्यं चातुर्यं ध्वनिश्च । तथा च साम्प्रतं मन्मथे विद्यमानं चातुर्यम् एनां वर्णयितुं नालमिति भावः ॥३३॥

एनामजानन् मनसि विचारयति—केति । देव्याः परिवारे परिजनेषु ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] का पुनरेषा देवी-परिवारे । भवतु, कौतूहलेन देवी ओल्लागतं निज-मातुल-भावुकं मृगाङ्क-वर्माणं वारं वारं विरचित-महिलावेशं कारयति ।

ओल्लमिति प्रतिभूवाचको देशीय-शब्दः । "ओल्लं मधु माय इवि कमसंवभोम" इति विक्रम-चरिते प्रयोगः । भावुकः प्रियः । "भावुकं कुशलं प्रोक्तं भावुकः प्रिय उच्यते" इत्यनेकार्थध्वनि-मञ्जरी । केचित् णिअ-माउल-भावुअमित्यत्र [ णिअ-माउल-भादुअं इति पठन्ति, तन्न ] निज-मातुल-भ्रातुरपि मातुलत्वाविशेषेण णिअ-माउल-भादुअमिति कथनस्या-चातुर्येण प्रकृत-संविधान-कथा-सन्दर्भासङ्गत्यापत्तेः । 'जह एसो मिअङ्कावली'ति तृतीयांक-वक्ष्यमाण-वाक्य-विरोधाच्चेति दिक् ।

---

1. V. r. लेखा ।
2. V. r. अहिणआगदं उचहणागदं ।
3. V. r. जादकं ।
4. V. r. धारेदि (धारयति) ।

तं च मुणिअ[1] अण्णाअ[2]-परमत्थेहिं चित्त-करेहिं[3] तधा ज्जेव[4] चित्ते आलिहिद त्ति तक्केमि। ता ण विलं फोलइस्सं[5]। भमदु[6] दाव पिअवअस्सो। (प्रकाशम्) भो मेहावि सि[7] कुमारिआ क्खु एसा एदाए णेवच्छ-लच्छीए[8] लक्खीअदि।

राजा। यथाह प्रियवयस्यः।

कन्येति सूचयति वेष-विशेष एव
यन्नील-चोलकवती लिखिताऽत्र चित्रे।

च० त०—ईदृशरूपेयं नात्र लेख्येति भावः। मुणिअ इत्यत्र "ज्ञो जाण-मुणाविति" मुणादेशः। "परमार्थस्तु याथार्थ्यं" इति भरतः। कुमारी कन्या। नेपथ्य-लक्ष्म्या वेष-सम्पदा। प्रिय-वयस्यः विदूषक इति यावत्। यथा आह वदति तथैवेत्यर्थः।

तमेवोल्लेखं यथा-सम्प्रदायं समर्थयते—कन्येति। यत् यस्मात् नीलश्चासौ चोलकः सोऽस्या अस्ति नील-चोलकवती। तदिदं "कोक-प्रीति-चकोर-पारण-पटु-ज्योतिष्मती लोचने" इति मुरारि-प्रमाद-कथनवद् दयनीयम्। "निचोलः प्रच्छद-पटश्चोलकश्चे"ति

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] तच्च ज्ञात्वाऽज्ञात-परमार्थैश्चित्रकरैस्तथैवा-ऽऽलिखितेति तर्कयामि। तस्मान्न विलं स्फोटयिष्यामि। भ्रमतु तावत् प्रिय-वयस्यः।

"विलं रन्ध्रे रहस्ये चे"ति केशवः।

[ संस्कृतच्छाया—विदूषकः ] भो मेधाव्यसि, कुमारी खल्वेषा अनया नेपथ्य-लक्ष्म्या लक्ष्यते।

"चोकके"ति परकोरेति महाराष्ट्रा व्यवहरन्ति।

---

1. V. r. दट्ठूण। 2. V. r. अमुणिअ।
3. V. r. अरेहिं, कलेहिं। 4. V. r. सव्वेअ, सज्जेव।
5. विस्फोलइस्सं। 6. विह्मअदु।
7. V. r. वड्ढावइस्सं। 8. V. r. णेवच्छो, णेवत्थ-लीलाए।

पाणि-ग्रहात् प्रभृति तु प्रमदा-जनस्य

नीवी-निवेश[1]-सुभगः परिधान-मार्गः[2] ॥३४॥

( विमृश्य )

अहो वपुः-श्रीर्लिखितुर्जनस्य स्वाकार-संवादि यदत्र चित्रम् ।

इदं च पौरन्ध्रमवैमि कर्म रेखा-निवेशोऽत्र यदेकवारः[3] ॥३५॥

च० न०—गोवर्धनः । तु-शब्दः पूर्वस्माद्वैषम्य-द्योतकः । नीवीनां निवेशेन विन्यासेन सुभगो मनोज्ञः ध्वनिश्च । परिधानस्य मार्गो रीतिः ध्वनिश्च । युज्यते इति शेषः । आचारोऽयं महाराष्ट्राङ्गनासु विज्ञेयः ॥३४॥

विमृश्य आलोच्य ।

हेतुभिश्चित्र-प्रकृतिं निश्चिनोति—अहो इति । लिखितुर्लेखकस्य चित्रकरस्येति यावत् । जनस्य जन-शब्दः स्त्री-पुं-नपुंसक-साधारणः । "समौ त्रि-लिङ्गयां जन-लोक-शब्दावि"ति दण्डी । वपुः-श्रीः वपुषः शोभा । अहो आश्चर्यं, अनितर-साधारणीति भावः । नन्वतीन्द्रियस्य लिखितुः शोभा कथं वा ज्ञायते इत्यत आह—स्वेति । यत् यस्मात् कारणात् । अत्र पट्टके । चित्रम् । स्व-शब्देन लिखिता विवक्ष्यते तस्य आकारो रूपं तस्य संवादि वर्तते इति शेषः । अत एव "जादिसो चित्त-अरो तादिसी चित्त-अम्म-रुअ-सोहा" इत्यनुपदमेव कविना वक्ष्यते । "आकारः स्वाकृतौ रूप" इति यादवः । अथेदं किंकर्तृकमित्याशङ्क्याह—इदमिति । इदं कर्म चित्र-कृत्यं द्वितीयेति बोध्यम् । चकारः पाद-पूरणे । पौरन्ध्रं पुरन्ध्रीसम्बन्धि स्त्री-लिखितमिति यावत् । "विलासिनी पुरन्ध्री स्त्री"ति वामनः । अवैमि जानामि । नन्विदं

प्रा० प्र०—लिखितुर्लेखकस्येति यावत् । अत्र पट्टके । लिखितुर्वपुः-श्रीः शरीरशोभा उत्तमा मध्यमाऽधमा वेति चित्र-प्रतिमयैवानुमीयते इति भावः । कर्म चित्रात्मकं कृत्यम् । अत्र चित्रे । एकेति "त्रिष्वेकवारः सकृदर्थवाची"त्यगस्त्यः । एकरेख-चित्रं प्रायो महाराष्ट्र्यो लिखन्ति ।

1. V. r. विशेष । 2. M. Vasanta-tilaka. 3. V. r. धार । M. Upajāti.

( सम्यग् विभाव्य[1] ) तदियं मकरध्वज-वैजयन्ती काऽपि स्वयमेव स्वं लिखितवतीति निर्णीयते ।

विदूषकः । सच्चं एदं[2] जदो गरिट्ठ-जण-गोट्ठीसु[3] इत्थं करिआ[4] सुणीअदि । जादिसो चित्तअरो तादिसी चित्त-अम्म-रुअ-सोहा,[5] जादिसो कई तादिसी कव्व-बंध-छाअत्ति ।

राजा । युज्यते, आकृतिमनुगृह्णन्ति गुणाः । अपि च सखे ! चारायण !

च० न०—पुरुष-लिखितमेवास्तु नियामकाभावादित्याह—रेखेति । यत् यस्मात् । अत्र चित्रे । रेखाणां शोण-रङ्ग-रस-भरित-कार्पास-मुखेषीका-वर्तिका-लिखितानां निवेशो विन्यासः । एकः वारः आवृत्तिर्यस्य तादृशोऽस्तीति शेषः । "आवृत्त्यवसरौघधेषु वारः" इति नन्दी । तथा च सकृद्विन्यस्त-रेखा-रूपत्वात् पौरन्ध्रमिदं चित्रमिति भावः । एतन्महा-राष्ट्राङ्गनासु प्रसिद्धम् ॥३५॥

विभाव्य निश्चित्य । तत् तस्मात् । वैजयन्ती पताका । तद्वत् त्रैलोक्य-वश-कारिणीति यावत् । स्वमात्मानम् ।

गरिष्ठ-जन-गोष्ठीषु श्रेष्ठ-जन-सभासु । "कारिका पद्य-वाक्ययोरि"ति त्रिकाण्डी । "कं मं मणो मण" (?) इति प्राकृत-मंजरी । काव्य-बन्धच्छाया कविता-गुंफन-रीतिः । इत्थं वदता कविना निजं महाराष्ट्रजत्वं सूचितमित्यवगन्तव्यम् ।

गुणाः लावण्यादयः आकृतिमनुगृह्णन्ति । स्व-लिखितायाम् अस्यामेव मनोज्ञाकृतौ सर्वे गुणाः शोभन्त इति भावः ॥

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] सत्यमेतत्, यतो गरिष्ठ-जन-गोष्ठीष्वित्थं कारिका श्रूयते । यादृशश्चित्रकरस्तादृशी चित्र-कर्म-रूप-शोभा, यादृशः कविस्तादृशी काव्य-बन्धच्छायेति ।

"प्रायश्चित्रं भवेद् रम्यं चित्रकृद् यदि रूपवानि"ति चित्र-पद्धतिः ।

---

1. V. r. विलोक्य । 2. V. r. एवं नेदं ।
3. V. r. गोट्ठीसु वि । 4. V. r किल, किर । 5. V. r. रुअ-रेहा ।

क्रम-परिणत-रेखा-मांसलैरङ्ग-भागै-[1]
लघुरपि लिखितेयं लक्ष्यते[2] पूर्ण-मूर्तिः ।
अयमपि सुकुमारः सात्त्विकानां निवेश-
श्चतुर-मसृण-मुग्धं भावमाविष्करोति[3] ॥३६॥

च० त०—लेखने हस्त-चातुर्यं वर्णयति—क्रमेति । लघुः कृशा लिखितापि इयं क्रमेण पर्यायेण परिणताः परिणाम-दशां प्राप्ताः याः रेखाः मूर्ति-पूर्ति-नियामक-सीमा-रूपाः जीव-रेखाः ताभिर्मांसलैः पुष्टैः अङ्गानाम् अवयवानां भागैः सौष्ठवैः । "प्रदेशे सौष्ठवे भाग" इति मेदिनी । पूर्णा अन्यूनातिरिक्ता सम-विभक्ताङ्ग-सुश्लिष्टेति यावत् । तथा च 'सम-विभक्ताङ्ग' इति रामायणे । "इदं तु लक्षणं प्रायो नारी-पुरुषयोः सममि"ति शृङ्गार-दीपिकायाम् । अत एव "चतुरस्र-शोभि वपुर्विभक्तं नव-यौवनेने"ति कालिदासः[4] । मूर्तिः वपुर्यस्याः तथाविधा सती लक्ष्यते दृश्यते । अयं दृश्यमानोऽपि सुकुमारः कोमलः सात्त्विकानां सत्त्व-संबन्धिनां शृङ्गार-चेष्टात्मक-हाव-भावाभिनयानाम् इति यावत् । "शृङ्गार-चेष्टाः सत्त्वाः स्युर्हाव-भावाभिनीतयः" इति रूपकादर्शे । निवेशः तेषु तेषु नेत्रादि-स्थलेषु उन्मीलन-चमत्कारादि-रूपो विन्यास-विशेषः । चतुरः कथनाभिमुखः दक्षश्चासौ मसृणः प्रेम्णा चिक्कणः स्निग्ध इति यावत् । अत एव मुग्धो मनोज्ञस्तं भावम् आन्तरमभिप्रायम् आविष्करोति वहिः प्रकाशयति । इवेति शेषः । एतेन तावदस्या नायिकाया भुवनातिशायि लावण्यं चित्र-लेखन-प्रावीण्यं च सूचितमिति बोध्यम् ॥३६॥

1. V. r. भङ्गैः ।
2. V. r. दृश्यते ।
3. M. Mālinī.
4. KS. I. 22. p. 28.

विदूषकः । इदो देवी मज्जन-वदिअरे घरे सपरिवारा[1] आलिहिदा ।

राजा । इदमेव रूप-रत्नं सम्भावयावस्तावत्[2] ।

विदूषकः । इहावि सा अत्थि ज्जेव्व ।

राजा । (आत्म-गतम्) एकं चक्षुरनेकत्र सा । (विदूषकं प्रति) कासौ ?

विदूषकः । इअमिअं ।

देवी मदन-सुन्दरी । मज्जनस्य स्नानस्य व्यतिकरो यस्मिन "सम्बन्धे च प्रकरणे योग्ये व्यतिकर" इति नानार्थ-रत्न-माला । गृहस्य घरादेशः । घर इति महाराष्ट्राः ।

इदं चित्र-स्थितमित्यर्थः । सम्भावयावः दर्शनादरेणेति भावः ।

इह मज्जन-गृहे ।

एकं चक्षुरिति ध्वनिः । चक्षुषोः परस्परम् एकभागे स्थितत्वात् एकमित्यौपचारिको व्यपदेशः । "एके मुख्यान्य-केवला" इत्यमरः[3] । अथवा चक्षुर्द्वयमपि एनामेव द्रष्टुम् अभिन्न-भावेन लम्पटमिति एकं चक्षुरित्युक्तम् । अनेकत्र एकत्र नेत्यर्थः । बहुषु स्थलेष्विति यावत् ।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] इतो देवी मज्जन-व्यतिकरे गृहे स-परिवारा-लिखिता ।

व्यतिकरः सम्बन्धः ।

[संस्कृतच्छाया—विदूषकः] इहापि साऽस्त्येव ।

[संस्कृतच्छाया—विदूषकः] इयमियम् ।

---

1. V. r. इदो वि देवी मज्जणवदी असेस-परिवारा । 2. V. r. सम्भावयामः ।
3. III. 3. 16, p. 190 ।

राजा । ( विलोक्य सोत्कण्ठम् )

येनोत्पलानि च शशी च मृणालिकाश्च
रम्भा-दलञ्च[1] कमलानि च निर्मितानि ।
नूनं स एव मृग-शाव-दृशोऽपि वेधाः
संवित्-क्रमो[2] यदयमेकतया चकास्ति[3] ॥३७॥

विदूषकः । (स्तम्भे शालभञ्जिकां विलोक्य) इअं पि सच्चं ज्जेव[4] ।

च० न०—संप्रत्यभेदाध्यवसायाद् उत्पलादीनामस्या अवयवानां चैक-जनकत्वं वर्णयति—येनेति। येन वेधसा उत्पलं कुवलयं, मृणालिका बिसं, स्वार्थे कः । रम्भा-दलं कदली-काण्डम् । "स्याद्दलं पर्ण-काण्डयोरिति" हेमः[5] । कमलं सहस्र-पत्रम्, गङ्गादिषु लभ्यम् । एतानि वस्तूनि निर्मितानि सृष्टानि । स एव वेधाः ब्रह्मा मृग-शाव-दृशः हरिण-डिम्भाक्ष्या अपि । एतेन नेत्रयोः अति-नैल्य-चलन-चारु-चक्यादिकं व्यज्यते । अत्र अक्षि-मुख-भुजोरु-चरण-नाम्नाम् अवयवानामिति शेषः । रम्भाश्च दलानि चेति व्युत्पत्त्या ऊर्वङ्गुल्य-धरेत्यूहे उत्पलाद्यैकैक-वस्तूल्लेख-प्राय-पाठ-विरोधः । स्रष्टा रचयिता । यत् यस्मात् जगदुपमानत्वेन व्यवह्रियमाणानाम् उत्पलादीनाम् उपमेयानामस्या अवयवानां च एकतया अनन्यत्वेन अयं प्रसिद्धः संविदः ज्ञप्तेः क्रमोऽनुभवः । चकास्ति स्फुरति । किञ्चिदपि भेदो नास्तीति भावः ॥३७॥

सच्चा यथार्था । "सत्यं त्रिषु तद्वती"त्यमरः[6] । अत एव "सत्याः सन्तु यजमानस्य कामा" इति श्रुतिः । "सत्येयमार्ये"ति कुटुम्ब-कविः । "सत्यैव सा भारती"ति युद्ध-काण्ड-चम्पौ नाथ-चरणाश्च । सच्चम् इत्यत्र "त्य-थ्य-द्यानां च-छ-जा"[7]इति चत्वम् ।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] इयमपि सत्यैव ।

---

1. V. r. लताश्च । 2 V. r. सृष्टि-क्रमो । 3. M. Vasanta-tilaka.
4. V. r. सज्जेव । 5 But cp. ASM., Chap. II. 505, p. 40, KSS, no 68 ; cp also AC., 4. 189.
6. 1, 5, 22, p. 30. "सत्यं तथ्यंमृतं सम्यगमूनि त्रिषु तद्वति" ।
7. PPr. of Var., 3. 27, p. 70.

राजा । इयमपि साऽस्मद्विलोचन-चकोर-चन्द्रिका ।

( विलोक्य सोत्कण्ठम् )

सा दुग्ध-मुग्ध-मधुरच्छविरङ्ग-यष्टि-
स्ते लोचने तरुण-कैतक[1]-पत्र-दीर्घे ।
कम्बोर्विडम्बन-करश्च स एव कण्ठः
सैवेयमिन्दु-वदना मदनायुधं वा[2] ॥३८॥

( स-वितर्कम् )

च० त०—विलोचनेत्युल्लेखः "चन्द्रमा रोचयतु लोचन-चकोरमि"ति जयदेव-कृत-मुरारि-रागाष्टपदीछायानुसारी ।

पूर्व-दृष्टैवेयमित्याह—सेति । तच्छब्द-चतुष्टयस्य यथा-लिङ्गं पूर्व-दर्शनमेवोह्यम् । दुग्धस्येव मुग्धा मनोज्ञा मधुरा अतिशुभ्रा छविः कान्तिः यस्याः । "सान्द्रं शुभ्रन्तु मधुरमि"त्यच्युतः । अङ्गमेव यष्टिः । "काठी" इति महाराष्ट्राः[3] । "अङ्गं गात्रं" चेति त्रिकाण्ड-शेपः[4] । तरुणम् अजीर्णं च तत् केतक्या इदं कैतकं तत् पत्रम् तद्वत् दीर्घे । "रम्भाव्ज-केतकी-पत्राण्यक्ष्ण" इति काव्य-चिन्तामणौ । कम्बोः शङ्खस्य । मदनायुधं संमोहनास्त्रम् । "अन्यार्थे निश्चयेऽपि च" इति कपिलः । न विद्यते आयुधं यस्मादनायुधं मम अनायुधं मदनायुधम् । तथाच एनां विना मम वशीकरणे तावदितरायुधं नास्तीति भावः ॥३८॥

स-वितर्कम् ऊहेन सहितं यथा तथा ।

---

1. V. r. केतक । 2. V r. या । M. Vasanta-tilaka 3. Moles. p. 151
4. Not traced in the TS; but cp. AK. II. 6. 70, p. 103.

न स्वप्नानुभवस्य कश्चिदपरः स-ब्रह्मचारी मम
स्यात्संकल्पकृतश्चकास्ति[1] मनसः कस्यैष रेखा-क्रमः ।
तन्मन्ये क्वचिदस्त्यसौ कुवलयच्छाया-मुषा चक्षुषा
यत्सादृश्य-परिग्रहादिह दृशौ दीर्घे समावासिते[2] ॥३९॥

वितर्कमेवोपपादयति—नेति। मम स्वप्नानुभवस्य "स-ब्रह्मचारी सदृश" इति योगानन्दः। "पङ्कज-स-ब्रह्मचारि-लोचनये"ति भगवत्पादाः। अपरः कश्चिद् अनुभव इति शेषः। न नास्त्येवेति भावः। मनसः सङ्कल्पेन कृतः इत्थं लेख्यमिति संकल्प्य लिखित इति भावः। तदिदं "चित्ते निवेश्य परिकल्पित-सत्त्व-योगे"ति[3] नाथ-चरण-व्याकृत-शाकुन्तलच्छायानुसरणमिति ज्ञेयम्। "सङ्कल्पः कर्म मानसमि"त्यमरः[4]। एष रेखायाः संस्थानस्य क्रमो रीतिः। "रेखा त्वाकृति-संस्थान-श्रेणीष्वि"ति धरणिः। "टेवि" इति महाराष्ट्राः[5]। चकास्ति शोभते, कस्य जनस्येति शेषः। स्यात् भवेत्। नन्वेष कस्या अपि स्यादेव ; अन्यथा चित्रस्यैवात्रसक्तेरित्याशङ्क्य काचिदस्तीत्यत आह—तदिति। तत् तस्मात् असौ चित्र-प्रकृतेः प्रकृतिः नायिकेत्यर्थः। कुवलयस्य उत्पलस्य छायां कान्तिं मुष्णातीति मुट् तेन मुषा चक्षुषा। जात्यावेक-वचनम्। चक्षुः-पर्यायमिति यावत् (?)। उपलक्षिता सती क्वचिदस्ति। ययोः चक्षुषोः सादृश्यं सदृशत्वं तस्य परिग्रहात् आदानात्। अथवा सादृश्यमेव परिग्रहो मूलहेतुरिति यावत्। तस्मात्। "मूलादाने परिग्रहा"विति धनञ्जयः[6]। इह प्रतिकृतौ। दीर्घे दृशौ चक्षुषी सम्यगावासिते निवासं प्रापिते, लिखिते इति यावत्। मन्ये। अत्र नेत्रयोरेव वर्णनानुग्रहात् सर्वेन्द्रियाणां नयनं प्रधानमित्येतत् प्रशंसितम्। अत एव "तथापि प्रागल्भ्यं किमपि चतुरं लोचन-युग" इति—द्वितीयाङ्के कविना वक्ष्यते ॥३९॥

प्रा० प्र०—**स-ब्रह्मचारी** समानः।

1. V. r. चकास्तु । 2. V. r. वेशिते । M. Śārdūlavikrīḍita
3. ASK. of Kālidāsa. II. 9. p. 71 NSP. ed.
4. 1. 4. 2, p 45 5. Not in Moles
6. Not in Dhananjaya's Nāma-mālā

(विभाव्य[1]) भवतु, पुनर्योग्य-स्थान-विन्यासमासादयतु स्वप्न-हारः, संचरतु शालभञ्जिका-रूपाया अप्येतस्याः कण्ठ-मूलम्, अलंकरोतु बाल-विचकिल-वल्लीं कोरक-निकुरम्ब इति। (तथा करोति)।

विदूषकः। इदो वि चित्त-गदा सञ्जेव। (सोल्लासम्) मिअंक-प्पतिबिंब[2]-मालाहिं विप्पलद्धह्मि। अअं उण पच्चक्खो पुण्णिमा-चन्दो।

राजा। क्व पुनरसावस्मन्नयनामृत-वर्तिः[3]।

विदूषकः। इयमियम्। या हरिणंक-खण्ड-पंडरेहिं तिरिच्छेहि

च० न०—विभाव्य आलोच्य। भवतु आलोचनानुकूलमिति भावः। पुनः शब्दालङ्कारे। शालेति। साक्षादियं कदाऽलक्ष्यत वेत्यान्तरो भावोऽवगम्यते। "समूहे निकुरंबोऽस्त्री"ति शब्द-माला।

उल्लासेन सहितं यथा तथा। "मुख-विकासे स्यादुल्लासः" इति भरतः। मृगाङ्कस्य चन्द्रस्य प्रतिबिम्ब-मालाभिः स्फटिक-भित्तिषु प्रतिफलित-स्वरूपाणां पंक्तिभिः। प्रत्यक्षः दर्शन-स्पर्शन-सल्लापादि-योग्य इति यावत्।

नयनयोः सुखातिशय-करत्वात् अमृत-वर्तिरिति व्यपदेशः। "इयममृत-वर्तिर्नयनयोरि"ति नाथ-चरण-व्याकृतोत्तर-राम-चरिते[4]।

तिर्यग्भिरित्यनेन शृङ्गार-सर्वस्वी-भूत-दर्शनेषु वक्रिमा व्यज्यते।

प्रा० प्र० —[संस्कृतच्छाया—विदूषकः] इतोऽपि चित्त-गता सैव। भो मृगाङ्क-प्रतिबिम्ब-मालाभिर्विप्रलब्धोऽस्मि। अयं पुनः प्रत्यक्षः पूर्णिमा-चन्द्रः। पडीत्यत्र "प्रति-वेतस-पताकासु ड"[5] इति डत्वम्।

[ संस्कृतच्छाया—विदूषकः ] इयमियम्। या हरिणाङ्क-खण्ड-पाण्डरैस्तिर्यग्भि-

1. V. r. विलोक्य। 2. V. r. पडि-विंब। 3. V. r. वृष्टिः।
4. URC. 1. 38, p. 24 5. PPr., 2. 8, p. 36-38

दिट्ठिच्छडा-कडक्खेहिं विप्फुरेदि दिम्मुहाइं, पाणि-मंचलणेण[1] विच्छुरेदि कंकेलि-पल्लवाइं, चरण-चालणेण विरएदि[2] पंकेरुह-[3] संका-समाउलाइं भमर-जालाइं[4]।

राजा। भवदाशंसिता[5] सत्य-स्वप्नतैव संवृत्ता[6]। (विलोक्य) सैवेयं सञ्जीवनौषधिर्मकरध्वजस्य विशल्य-करणौषधिर्मे हृदयोद्भेदस्य[7]। (विभाव्य—)

च० त०—"दृष्टिच्छल" इति लिङ्ग-निर्णये। अत्र दृष्टीनां पाण्डुरत्वापादानं प्रसाद-सूचकम्। तथा च काव्य-चिन्तामणौ "स्त्रीणां स्वभाव-संक्रोध-प्रसादेषु दृगञ्चले। नैल्या-रुण्याच्छता वर्ण्या" इति। विच्छुरयति द्योतयति। सञ्चलनं धूननम्। चरणाभ्यां चालनेन सञ्चारेण। "चालने" इति महाराष्ट्राः[8]॥

आशंसिता "सच्च-सिविणअत्तणं दे होदु"[9] इति पूर्वं शुद्ध-विष्कम्भानन्तरं प्रार्थितेति यावत्। संवृत्ता संजाता। जीवन-प्रदा औषधिरित्यर्थः। मकरध्वजस्य भालाक्ष-दग्धत्वाद् इति भावः। हृदये य उद्भेदः विस्फोटः। तस्य विशल्यस्य विरह-सन्ताप-रूप-शल्याभावस्य करणे ओषधिः। "उद्भेदो विस्फोट उदयेऽपि चे"ति समासः। स्फोड इति महाराष्ट्राः।

विभाव्य आलोच्य।

प्रा० प्र०—दृष्टिच्छटा-कटाक्षैर्विस्फुरयति दिङ्-मुखानि, पाणि-सञ्चलनेन विच्छुरयति कङ्केलि-पल्लवानि, चरण-चालनेन विरचयति पङ्केरुह-शङ्का-समाकुलानि भ्रमर-जालानि।

---

1. V. r. सञ्चारेण  2. Alt. form विरयइ, विरएइ। See PrāV., 4. 64.
3. V. r. पंकअ
4. V. r. उलाइं।
5. V. r. भवत्-प्रशंसिता
6. V. r. जाता
7. V. r. हृदयस्स
8. Moles. p. 279.
9. P. 30

मात्रा-नर्तित[1]-मण्डन-भ्रु[2] वदनं किंचित्प्रगल्भे दृशौ
स्तोकोद्भेद-निवेशित-स्तनमुरो मध्यं दरिद्राति च ।
अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणी-दृशः
सत्यंकार[3] इव स्मरैक-सुहृदा तद् यौवनेनार्पितः[4] ॥४०॥

च० त०—अस्यामङ्कुरितं यौवनं लक्षणारम्भैर्विवृणोति मात्रेति । यत् यस्मात् अस्या वदनं मात्रा-नर्तिते ईषदारेचिते । 'ईषदर्थेऽर्द्ध-मात्रे'ति मुकुटः । नैविड्या-पादकांजन-रेखा-रूपं मण्डनम् अलङ्कारस्तदुपलक्षिते भ्रुवौ यस्मिन् तत् । 'मण्डल-भ्रु' इति पाठे मण्डल-शब्दोऽर्ध-मण्डल-वाचकः । तथा चार्ध-मण्डल-कारि-भ्रु इत्यर्थः । अत एव चन्द्रार्ध-कृत-शेखरश्चन्द्रार्ध-मौलिरित्यादि-प्रयोगे सत्यपि चन्द्र-शेखरश्चन्द्र-मौलिरित्यादि-प्रयोगोऽपि युज्यते । दृशौ नेत्रे किञ्चित् मनाक् प्रगल्भे हाव-भाव-दान-ग्रहण-चतुरे । उरो वक्षः । स्तोकोद्भेदम् अल्पोदयं यथा तथा निवेशितौ स्थापितौ पुन्नाग-फल-परिमितौ स्तनौ यस्मिन् तत् । अत्र स्तन-प्रमाणं रसिकैर्यथानुभावमूह्यम् । मध्यं दरिद्राति कृशी-भवति । अयं चः पाद-पूरणे । 'दरिद्रात्यद' इति वा पाठः कल्प्यः । जघनं नितम्बश्च "जघनं पुरोभाग-नितम्बयोरि"ति यादवः । अत एव "जघनानीव योषित" इत्यादि-कविः । कलया गौरव-शिल्पेन, "कला-शिल्प" इत्यमरः[5] । घनं भार-शालि, "घनो मूर्ति-गुण" इत्यमरः । तत्तस्मात् स्मरस्य एक-सुहृदा अनन्य-मित्रेण यौवनेन तारुण्येन एण्या मृग्या इव एण्याविव च दृशौ यस्याः । अङ्गमङ्गं प्रति प्रत्यङ्गं प्रत्यवयवम् । सत्यं-कारः अर्पित इव । "क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियामि"त्यमरः[6] । तथा च इदमङ्गमेवम् अदः इत्थम् एतत् इयत् एव चेति यौवनेन स्मरे साक्षिणि हरिणी-दृशस्तत्त-दङ्गं शपथ-पूर्वकमर्पितमिति भावः ॥४०॥

प्रा० प्र०—मात्रा ईषत् ॥४०॥

---

1. V. r. नर्तन
2. V. r. परिडत-भ्रु
3. V. r. सत्यंकारम्
4. V. r. अर्पितम्
5. III, 3, 199, p. 217.
6. II, 9, 82, p. 153.

विदूषकः । उल्लसिद-भ्रू-लदेण उदंगुलि-कर-कमलेण च अमुणा[1] संट्ठाणेण किं पि[2] कुणंती[3] एसा चिट्ठदि ।

राजा । यद् भ्रू-लते तरलिते यदुदङ्गुलीकः
पाणिः पुरो यदपि चक्षुरलब्ध[4]-लक्ष्यम् ।
उन्मुद्रिताधर-दलं च यदास्यमस्या-
स्तत्कार्य-कर्मणि[5] निपक्तमवैमि चेतः ॥४१॥

च० त०—उल्लसितेत्यादिकम् "उन्नमितैक-भ्रू-लतमि"ति नाथचरण-व्याख्यात-शाकुन्तल-च्छायानुसारीति ज्ञेयम् । संस्थानेन आकृति-विशेष-पूर्वकावस्थानेन ।

तदेव विशिनष्टि यदिति । यच्छब्द-चतुष्टयस्य यस्मादित्यर्थः । तरलिते चलिते । उन्नता अङ्गुल्यो यस्य उदङ्गुलीकः । चक्षुरपि पुरोऽग्रे अलब्धम् अप्राप्तं लक्ष्यं विषय-जातं येन अकिञ्चिद्ग्राहीत्यर्थः । उत् उत्कर्षेण अतिशयेन मुद्रितं संजात-मुद्रं मौन-शालि अधर-दलम् ओष्ठ-पल्लवं यस्मिन । तत् तस्मात् अस्याः चेतः मनः कर्म । कार्य-कर्मणीति कवेः प्रमादः, पौनरुक्त्यात् । अत एव "कर्म कृत्यं क्रिया कार्यमि"ति केदारः । अत्र नाथ-चरणैः दयया समाहितं कार्य-कर्मणि प्रयोजनमेव लीला तस्याम्, निपक्तमभि-निविष्टम् अवैमि जानामि । तथा च भ्रू-तरलनोदङ्गुलि-पाणित्व-लक्ष्यान्तर-वैमुख्य-मुख-मुद्रणाभिः कवन-चित्तेन गणाक्षर-मात्रा-गणन-निर्व्यापारान्तर-स्थिति-मौनानि यथा-क्रममूह्यानि ॥४१॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः] उल्लसित-भ्रू-लतेन उदङ्गुली-कर-कमलेन चामुना संस्थानेन किमपि कुर्वत्येषा तिष्ठति । कुणन्तीत्यत्र कृञः कुणादेशः ।

**कार्य-कर्मणि** प्रयोजन-करणे । नर्मणीति नर्मणीति वा पाठः ॥४१॥

---

1 V. r. इमिणा
2. V. r. उण
3. V. r. for कुण as 23, p. the viklapādeśa for कृ, see prāV., IV. 65 ; cp. I, 8 ; III. 130 ; Pr., 8. 223. For other uses of the participial adjective : GathSs,, I. 65 ; SupasC., pp. 36 and 113.
4. V. r. रलब्ध
5. V. r. स्तत्काव्य-कर्मणि

विदूषकः । एवं एदं[1] जदो पुरदो इमाए अद्ध-लिहिदा अक्-खरावली चिट्ठदि ।

राजा । वाचयति—

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा ।

(विमृश्य) अहो ! गाहन्यम्[2] । अहो ! शिखरिणी-पादः । अहो !

च० त०—अङ्क-त्रये पाद-त्रयं वर्णयिष्यन्नस्मिन् प्रथमाङ्के प्रथम-पादं प्रस्तावयति—विधत्ते इति । इह वपुषि । तरुणिमा तारुण्यम् । कतरत् अङ्गम् अवयवम् । सोल्लेखम् उल्लेख-सहितं जीव-रेखोल्लिखित-चित्रमिवेति यावत् । अत एव "उन्मीलितं तूलिकयेव चित्रमि"त्यादि भर्तृमीढः[3] । न विधत्ते सर्वमेव विधत्ते करोतीत्यर्थः । अत्रेत्थं सामान्यतो यद्भाणि तत् सर्वं तस्यामेव मृगाङ्कावल्यां विशेष-पर्यवसायीति सूक्ष्म-बुद्धिभि-र्बोध्यम् । गाहन्यम् गहनत्वं, कानन इवात्र प्रवेशोऽतिदुष्कर इति भावः । "तद्देत-द्विज्ञेयं ननु शिखरिणी-वृत्तमतुलमि"ति छन्दोऽर्णवे ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] एवमेतत् । यतः पुरतोऽस्या अर्ध-लिखिता अक्षरावली तिष्ठति । अल स्क-ष्क-क्षाणां ख[4] इति सामान्य-सूत्रेण खः । अक्खरावलीति प्रयोक्तुः कवेः कालिदासादीनामिव प्रमादः । "अक्ष्यादिषु छ"[5] इति विशेष-सूत्रेण अक्ष्यादि-गणे अक्षरस्यापि ग्रहणात् अच्छरावलीति[6] वक्तव्यस्य साधीयस्त्वात् ।

तरुणिमा तारुण्यम् ।

अस्मिन्नङ्के कविना संविधान-गाहन्याय श्रोतृ-जन-कौतुकाय च 'विधत्ते' इति श्लोकस्य प्रथम-पादो विनिवेशित इति बोध्यम् । अग्रे यथा-क्रममङ्क-त्रये शेषं पाद-त्रयं वक्ष्यते । "पृथक्-पादाश्चमत्कार्याः प्रत्यङ्कं विनिवेशनात् । संविधानार्थ-गाहन्ये कौतुकञ्च यथा भवेत् ॥" इति रूपकादर्शे नाटिकादर्श-लक्षणात् ।

---

1. V. r. एदं । 2. V. r. no अहो गाहन्यम् । 3. KS., I. 32.
4. V. r. ष्क-स्क-क्षाणां खः । P. Pr., 3. 29, p. 71.
5. P. Pr., 3. 30, p. 71.
6. V. r. But अक्खर is found widely used ; e. g., SupāsC., p. 659 ; VisesB., gāthā 455 ; also 457; SamAS., p. 35 ; KarG., I. 7.

सूक्ति-युक्ता वाचः । अहो ! हृद्या वैदर्भी रीतिः । अहो ! माधुर्यं पर्याप्तम्[1] । अहो ! निष्प्रमादः प्रसादः ।

विदूषकः । ता उचिद-काले[2] अभिसरीअदु सुंदरी । पिज्जदु णअणंजलि-संपुडेहिं पुण्णिमा-चंदो, पूरिज्जंतु कण्ण-कुहराइं सुहासिद-रसायणेहिं[3], णच्चावीअदु[4] रहसुत्थंभिद-हत्थो मअण-णट्टावओ[5] !

च० त०—"सार्थ-पुष्टिः तशृङ्गारा वैदर्भी रीति"रिति रीति-प्रकाशिकायाम् । पर्याप्तं सम्पूर्णम् । निष्प्रमादः अप-शब्दादि-दोप-रहितः प्रसादः प्रसन्नता ।

उचित-काले सु-मुहूर्ते । काल इति ध्वनिः । वाह्याभ्यन्तर-भेदात् कुहराणीति वहुत्वम । सुभापितान्येव रसायनानि द्रव-रूप-दिव्यौपधानि "अजरामरणं दिव्यं सर्व-काम्यं रसायनमि"ति रस-कला-निधौ धन्वन्तरिः । रहस्ये सुरत-नाट्य-स्थले उत्तम्भितौ उत्साहेन उन्नतीकृतौ हस्तौ येन । मदन एव नर्तापकः सूत्रधारः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] तस्मादुचित-कालेऽभिसार्यतां[6] सुन्दरी । पीयतां नयनाञ्जलि-संपुटैः पूर्णिमाचन्द्रः । पूर्यन्तां कर्ण-कुहराणि सुभापित-रसायनैः । नर्त्यतां रहस्योत्तंभितहस्तो मदन-नर्तापकः ।

चन्द्रो इति पाठे 'द्रे रो वे'ति[7] रेफादेशः । णच्चावीअदु इति देशीयः शब्दः । "नाचवावा" इति महाराष्ट्राः । अत एव सट्टके वोल्लइ-वोल्लं-मिश्रयादि-भापा-शब्दान् प्रयुञ्जानोऽयं महाराष्ट्र-कविरस्यामेव नाटिकायां 'जारिसो कई[8]' इत्याद्यवोचत, ईदृशी रीतिरभितोऽभि-रूपैरूह्या । हत्थो इत्यत्र तस्य थ" इति थत्वम् । णट्टावओ इत्यत्र "तस्य ट" इति टत्वम् ।

---

1. V. r. अपर्याप्तम् ।
2. V. r. कालम्
3. V. r. सागरे हिं
4. Similar use : SamarK , p. 26.
5. KarMan., I. 17, p. 12.
6. V, r. अभिसार्यतां
7. PPr. 3. 4.
8. P. 58 of this book.

राजा। (पदान्तरे स्थित्वा, चतुर्दिशमवलोक्य) अहो! दयिताद्वैतं वर्तते। तथाहि—

सुतनुरियमितस्ततश्च चित्रे[1]
गुण-गुरुरत्र च शालभञ्जिकेयम्।
स्थितमिव[2] सुतनोर्वपुश्चतुर्धा
स्मर-शर-ताप-रुजं विभज्य सोढुम् ॥४२॥[3]

तदेहि, समुपसृत्य सुभाषितेन श्रवणे कृतार्थयावः। न खलु व्यापारमन्तरेण कर-कलितापि[4] शुक्तिर्विमुञ्चति मौक्तिकानि इति। (उभौ परिक्रामतः)।

च० त०—कतिचित् पदानि अन्तराणि व्यवहितानि यस्य तत् पदान्तरं स्थित-स्थलापेक्षया अन्य-स्थल इति यावत्। "चतुर्दिशं स्याद्दिक्-चतुष्टय" इति संसारावर्तः। दयिता स्वप्न-दृष्टा तन्मयं च तदद्वैतम्। तां विना वस्त्वन्तरं नास्त्येवेति केचित्, तन्न। विभज्येत्युत्तर-वाक्य-विरोधात्। दयितायाः द्वैतं द्वैविध्यं वर्तते इत्येवार्थः। तदेवोपपादयति —तथाहीति। इयं सुतनुः इतः स्फटिक-भित्ति-चित्र-कर्मणि। वर्तत इति सर्वतोऽनुषङ्गः। ततः मज्जन-गृहादौ चित्रे च। अत्र अस्मिन् प्रदेशे। गुणैः लावण्यादिभिः गुरुः सर्वाधिका गुणे गुरुः गुरुत्व-गुण-युक्ता चेति यावत्। इयं शालभञ्जिका च। नन्वियं नाना-रूपास्तु नावता किं फलमित्याशङ्क्य सर्वस्यापि तदेकं शरीरमस्ति सैका व्यक्तिरस्तीत्यादि लौकिक-व्यवहारानुरोधेन व्यक्ति-व्यक्ति-भाजोरभेदाध्यवसायादनिष्ट-परिहार-रूपं फलमुदाहरति— स्थितमिति। सुतनोस्तस्या वपुः कर्तृ। ताप एव रुक् रोगः तं विभज्य सोढुं स्थितमिव। तथा च नैकसह्योऽयं निरतिशयस्तापः किन्त्वनेक-सह्य इतीयं सुतनुरेव चित्र-प्रकृति-साल-भञ्जिकात्मना स्थितेति भावः। च-द्वयमर्धयोः पाद-पूरण इत्यूह्यम् ॥४२॥

व्यापारमन्तरेण स्फोटनादिकं विना। करे कलिता धृतापि न विमुञ्चति खल्वित्यन्वयः।

---

1. V. r. चित्रैः
2. V. r. स्थितमिह
3. M. Puṣpitāgrā.
4. V. r. कलितापि

विदूषकः । ( पुरतः सरन् भीत्या आस्फोटं[1] नाटयित्वा ) भो ओसर ओसर, भूदंतरं क्खु किं पि[2] एदं, ता इमिणा पडि-कुविद-देवी-भू-लदा-भंग-कुडिलेण दंड-कट्ठेण[3] तडित्[4] ताडयिस्सं[5] ता पेक्ख मे पुरिस[6]-आरम् ।

राजा । तर्हि मालती-मुकुलैः[7]दुकूलं कल्पयिष्यसि ।

च० न०—सरन् सर्पन् । आस्फोटं घोषणम् । "किकली"ति महाराष्ट्राः[8] । भूतान्तरं भूत-भेदः । कुटिलेनेति । मान-वशात् प्रायेण देव्याः कोप-प्रकृतिरिति भ्रातृ-जायोपचार-मर्यादया विनोद-संप्रदाय इत्यूह्यम् । दण्ड-काष्ठेन कर्पूराधारार्ध-चन्द्राकार-सिद्ध-शुकादि-मुखाङ्किताग्र-भागेनेत्यर्थः । 'कुबडी" इति महाराष्ट्राः[9] ।

यदा मुकुलैर्दुकूलं कल्पयिष्यसि तदा भूतं ताडयिष्यसीति धैर्याभाव-व्यञ्जक-परिहासोक्तिः । "सुमना मालती जातिरि"त्यमरः[10] । अतिसूक्ष्मत्व-सूचको मालती-निर्देशः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भो अपसरापसर भूतान्तरं खलु किमप्येतत् । तस्मादनेन परिकुपित-देवी-भ्रू-लता-भङ्ग-कुटिलेन दण्ड-काष्ठेन तडित् ताडयिष्यामि । तत् पश्य मे पुरुषकारम् ।

हुङ् खु (?) निश्चय-वितर्कसम्भावनास्विति निपातः । कुडिलेणेत्यत्र "टो ड" इति[11] डत्वम् । तडित् शब्दानुकारः । पुरुषकारं सामर्थ्यमिति यावत् ।

---

1. V.r. स्फोटनं । 2. V.r. no किं पि ।
3. Further uses : KumarPC., 4. 15 ; 4.51 ; SupāsC., p. 354.
4. V. r. गाढम् 5. V.r. पाडिस्सं
6. Acc. to the sūtra इत् पुरुषे रोः, पुरुष becomes पुरिस ; PPr., 1.23, 17.
7. V.r. कुसुमैः
8. Moles. p. 173.
9. Moles. किंकली, p. 165.
10. II, 4. 73. p. 66.
11. PPr. 2. 20, p. 41.

विदूषकः । ता किं णु क्खु एदं ।

राजा । सखे ! तर्कयामि स्फटिक-भित्तेः परतः स्थितया स्वच्छ-भावादितः सुव्यक्तयाऽनया भवितव्यम् । तदेहि, केलि-कैलास-पश्चिमेनैनां सम्भावयामः । ( तथा कुरुतः ) ।

विदूषकः । तुरिदतरमवक्कन्ता सा, जदो असमंजसा इदो[1] देवी-वास-भवणाहिमुही[2] पअ-पंती[3] दीसइ ।

राजा । हृदय ! स्वस्ति भवते । एनामनुवर्तता स्मर्तव्या वयम् ।

च० च०—स्वच्छ-भावान्नैर्मल्याद्धेतोः । सुव्यक्तया सम्यक् प्रतिफलितया । केलि-कैलासस्य पश्चिमतः इत्यर्थः ।

असमञ्जसा गो-मूत्रिका-क्रमवत्तिर्यग्-गमनेनेति भावः । देव्याः वासो निवासो यत्र तच्च तद्भवनं वासागारमिति नाथ-चरण-व्याकृत-प्रबोध-चन्द्रोदये ।

स्वस्तीति । अनुक्तमपि त्वमनुसरिष्यसीति भावः । स्मर्तव्या इत्येतत् "स्मरणीयाः समये वयं वय" इति श्रीहर्ष[4]-कवनच्छायानुसारीति ज्ञेयम् ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] तस्मात् किन्नु खल्वेतत् ।

[ संस्कृतच्छाया—विदूषकः ] त्वरिततरमपक्रान्ता सा, यतोऽसमञ्जसा इतो देवी-वास-भवनाभिमुखी पद-पंक्तिर्दृश्यते ।

---

1. V. r. इअ  2. V. r. देवी-भवणाहिमुही

3. Further use: UpadM., index. V.r. पअ-परिवाडी । For other uses, see KumārC, 4. 33; 8. 24; KalpaS., index. पंती ; PrāV., 8.1.25, p. 5. In the Ācār S., 2.3.3 2, पंतिय is found.

4. NaiṣC., 2. 62

( नेपथ्ये ) जय जय त्रिलिङ्गा[1]धिपते ! सुखाय मध्यन्दिनं[2] भवतु भवतः। सम्प्रति हि—

धत्ते पद्म-लता-दलेप्सुरुपरि स्वं कर्ण-तालं द्विपः
शष्प-स्तम्ब-रसान्नियच्छति शिखी मध्येशिखण्डं शिरः।

च० त०—मध्यंदिनमिति एकं पदम्। "मध्यन्दिनं तु मध्याह्नः" इति सारस्वतः। अत एव "माध्यन्दिनाय नियमाये"ति नाथ-चरण-व्याख्यान-भोज-चम्पौ। प्रभाते प्रबुद्धस्य राज्ञोऽनेन स्वप्न-विलास-चरितेन मध्याह्नो जात इति भावः।

वैतालिकौ द्वाभ्यां मध्याह्नं वर्णयतः—सम्प्रतीति। पद्म-लताया नलिन्याः दलेप्सुः पत्रेच्छुः। पद्मिन्त्रादिति भावः। द्विपो गजः। उपरि शिरसि। स्वम् आत्मीयम्। "त्रिष्वात्मीये स्व" इत्यमरः। कर्ण एव तालं तालीपत्रम्। सद्यः पद्म-दलाभावेन ताप-भरासहत्वादिति भावः। धत्ते दधाति। तथा च पशुत्वेन हेतुना ताप-निवारण-कर्ण-ताल-यावदाच्छादन-रूप-कार्य-पूरणे ज्ञानाभाव इति भावः। शिखी मयूरः। शष्प-स्तंबं बाल-तृण-गुल्मे। "अप्रकाण्डे स्तंब-गुल्मावि"त्यमरः। रसादभिनिवेशात्। शिखण्डस्य चूडायाः मध्ये मध्येशिखण्डम्। शिरः नियच्छति नियमयति, ताप-निबन्ध-भूम्ना

प्रा० प्र—त्रिलिङ्गाः आन्ध्राः। "तैलङ्ग" इति महाराष्ट्रा वदन्ति। शष्पं बाल-तृणम्। "गङ्गाप्रपातान्त-निरूढ-शष्पमि"ति[3] कालिदास-प्रयोगान्नाममञ्जसमिति केचिदाहुः।

---

1. Roughly corresponding to the modern Hyderabad; IA. 214-16; CI. 3.840.
2. V.r. माध्यन्दिनी सन्ध्या।
3. RaghV., II. 26, v. r. गङ्गा-प्रपातान्त-विरूढ-शष्पम्।

मिथ्या लेढि मृणाल-कोटि-रभसाद्[1] दंष्ट्राङ्कुरं शूकरो
मध्याह्ने महिषश्च वाञ्छति निजच्छायं[2] महा-कर्दमम् ॥४३॥[3]

अपिच, विशन्तीनां स्नातुं जघन-विनिवेशै[4]र्मृग-दृशां
यदम्भः संप्राप्तं प्रमद-वन-वाप्यास्तट-भुवम् ।
गभीरे तन्नाभी-कुहर-परिणाहाध्वनि सरत्[5]
कुहूङ्कार-स्फारं रचयति च नादं भ्रमति[6] च ॥४४॥

च० न०—अवस्थापयतीत्यर्थः। तस्य सहजोऽयं गुण इति भावः। शूकरो वराहः। मृणालकोटौ विसाग्र इव रभसाद् वेगात् चर्वति चर्वण-वासना-वशेनेति भावः। स्व-दंष्ट्राया एवाङ्कुरम् एकदेशम्। मिथ्या असत्यं यथा तथा। उदर-भरणाभावादिति भावः। "लेढि भक्षयती"ति माठरः। निजैव छाया यस्मिन्। "स्वके निजमि"त्यमरः। महान् विशालश्चासौ कर्दमो जम्बालः तं वाञ्छति इच्छति। शीतोपचार-साधनेन ताप-निवृत्तये इति भावः ॥४३॥

स्नातुं विशन्तीनाम् अर्थात् वापीमिति सिद्धम्। मृग-दृशां जघनानां नितम्बानां विनिवेशैः सम्प्रवेशैः प्रमद-वनस्य अन्तः-पुरोचितोपवनस्य वाप्याः दीर्घिकायाः। यत् अम्भः सलिलं कर्तृ, तट-भुवं तीर-प्रदेशं सम्प्राप्तम्। तथा च नितम्बानां स्थौल्यातिशयेन वाप्याः सलिलमुल्लोलित-वशाद्वहिराप्लुतमिति भावः। तदम्भः गभीरे गम्भीरे मृग-दृशामित्यनुषङ्गः। नाभ्य एव कुहराणि सुषिराणि, तेषां परिणाहो विशालता, सैव अध्वा मार्गः, तस्मिन्। सरत् गच्छत् सत्। "निम्नमनुसरति सलिलमि"ति न्यायान्नाभी-गर्ते निविशत इति भावः। कुहूङ्कार इति शब्दानुकारः। स स्फारोऽभिवृद्धो यस्मिन् तं नादं निनदम्। रचयति भ्रमति च। एतेन मृग-दृशो विपुल-नितम्बाः सावर्त-गम्भीर-नाभ्यश्चेति व्यज्यते। तथा च "सावर्त-नाभ्यश्च महा-नितम्बाः स्त्रियस्तु सौभाग्यमवाप्नुयुश्चिरम्" इति सामुद्रिके शास्त्रे वराह-मिहिराचार्याः। एकश्चकारोऽधिकः, विरचयतीति निनादमिति वा पाठः ॥४४॥

प्रा० प्र०—तद् अम्भः ॥४४॥

---

1. V. r. रभसा। 2. V. r. च्छाया-। 3. M. Śārdūla-vikrīḍita
4. V. r. परिवेषैः। 5. V. r. रसत्। 6. V. r. निनादं नमति च

विदूषकः। भो, देवीए भवणं गदुअ मज्झण्ण-मंझं णिअत्तिअ तिस्सा पउत्तिं लक्खीयदु। (इति निष्क्रान्तौ)

इति श्रीबाल-कवि-कविराज-राजशेखर-विरचितायां विद्ध-शाल-भञ्जिकाख्य-नाटिकायां प्रथमोऽङ्कः ॥१॥

च० न०—मज्झण्ण-संझमित्यत्र "ध्य-ह्योर्झः" इति झत्वम्। सन्ध्यामिति वदन्-आरायणस्य भोजने तात्पर्यमिति बोध्यम्। ताए तोए तीअ तिस्सा तीसे तीआ तस्सा तासे इति त्रिविक्रम-पद्धतिः। प्रवृत्तिर्वार्ता ध्वनिश्च। लक्ष्यतां ज्ञायताम्। सर्वे प्रश्निकादयः इत्यलमतिविस्तरेण (?)।

इति महाराज--पद--महनीय--तुक्कोजि--राज-महामात्य-मौन-भार्गव-कुल-कूपार-चन्द्र-चौण्डो-बालाजि--पौत्रस्य कौण्डिन्य--गोत्र--पारावार-निष्कलङ्क-कौस्तुभ-तिम्माजि-बालाजि-दौहित्रस्य काशी-महादेव-तनुजस्य शाकम्भरी-परम-हंस-चिदम्बर-ब्रह्मानुजस्य पञ्च-षष्टि--प्रबन्धी--दश--भाषा--भव्य--काव्याष्टपदी--पद--पद्य--वर्ण--विलसदन्यूनाक्षर-मालिकस्य स्तवन--कवन-धौरन्धरी-पारीणस्य गीत--गाथा--सहस्र-चतुष्टय-चतुर-दिव्य-देवी-ताटङ्क--लिपि-कल्पकस्य सुन्दरी--कमलाजानेर्वश्य--वचः-सर्वज्ञ-सरस्वती-नाम-त्रय-मण्डितस्य घनश्याम-पण्डितस्य सुवर्ण-ताटङ्क-पुनरुक्त-भूषण-श्रुतिभ्यां सौभाग्यवतीभ्यां पत्नीभ्यां विरचिते नाथ-चरण-कृत-विद्धशाल-भञ्जिका-प्राण-प्रतिष्ठानुचर-चमत्कार-तरङ्गिणी-नामधेये सुन्दरी-कमलीये सहज-समाख्याने व्याख्याने प्रथमोऽङ्कः ॥

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] भोः, देव्या भवनं गत्वा मध्याह्न-सन्ध्यां निर्वर्त्य तस्याः प्रवृत्तिर्लक्ष्यताम्।

इति महाराज-पद-महनीय-तुक्कोजि-राज-महामात्येन काशी-महादेव-तनुजेन शाकम्भरी-परमहंस-चिदम्बर-ब्रह्म-योगि-राजानुजेन त्र्यधिक-पञ्चाशत्-प्रबन्धीकरेण पद-सहस्र-देवीताटङ्क-लिपि-कल्पकेन सुन्दरी-कमला-जानिना घनश्यामेन विरचितायां शिवरात्रि-चतुर्थ-यामारब्ध-परिपूरितायां विद्ध-शालभञ्जिका प्राण-प्रतिष्ठा-नाम-व्याख्यायां प्रथमोऽङ्कः ॥

---

1. पउत्तिलंभे पअट्टीअदु।

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशतो मिथः सम्मुखीने चेट्यौ ) ।

एका । ( परिक्रम्य इतरामञ्चले विधार्य ) हला तरंगिए ! हिअअ-पदिट्ठिद[1]-राअक्खरा विअ लक्खीअसि । जदो[2] संमुहागदं पि मं अणालविय[3] थिदासि[4] ।

द्वितीया । (समालिङ्ग्य) सहि कुरंगिए ! मा[5] कुप्प, गौरी मे कुप्पदु, जइ तं[6] मए दिट्ठासि अण्ण-हिअअत्तणेण ।

कुरङ्गिका । सहि ! कीदिसं[7] अण्णहिअअत्तणं ।

च० न०—अथास्मिन द्वितीयांके वृत्त-वर्तमानागामि-कथां वर्णयिष्यन अलीक-विवाहेन विदूषकं विडम्बयिष्यन सोत्कण्ठं राजानं चावतारयिष्यन् कविस्तदुपक्षेपाय तरङ्गिका-कुरङ्गिकालापमयं प्रवेशकमुपक्रमते—तत इति । ततः देव्या भवनं प्रति गतानन्तरम् । "सम्मुखीनस्त्वभिमुख" इति विश्वः ।

एका कुरङ्गिका

द्वितीया तरङ्गिका । गौरी पार्वती ।

प्रा० प्र०—[ संस्कृतच्छाया—एका ] हला तरङ्गिके, हृदय-प्रतिष्ठित-राजाक्षरेव लक्ष्यसे । यतः सम्मुखागतामपि मामनालप्य स्थितासि ।

[संस्कृतच्छाया—द्वितीया] सखि कुरङ्गिके, मा कुप्य । गौरी मे कुप्यतु यदि त्वं मया दृष्टासि अन्य-हृदयत्वेन ।

[संस्कृतच्छाया—कुरङ्गिका] सखि कीदृशमन्य-हृदयत्वम् ?

---

1. V. r. प्पविट्ठ ।
2. V. r. जं दाणीं ।
3. V. r. अणालक्खीय ।
4. V. r. पचलिदासि ; पउत्तासि ; पउद्दासि ।
5. V. r. उण after मा ।
6. V. r. no तं ।
7. V. r. अइ ! कीदिसं दे ।

तरङ्गिका । तादिसं, जादिसेण तुह वि पुरदो मंतअंतीए[1] वि[2] उक्कंपदि विअ[3] मे हिअअं ।

कुर । हिअअ-णिव्विसेसम्मि जणे आसंकंतीं[4] कोदूहलं मं पुच्छावेदि[5] ।

तर । जहा तहा[6] भोदु ण पच्छादइस्सं, ण हि सिणेहो जुत्ताजुत्तमनुरुंधेदि[7] ।

कुर । अदो ज्जेव्व मे आसंघो कधं विअ सहकार-लट्ठीए कलकंठी कुंठिद-प्पणआ[8] होदि ।

तर । एव्वं[9] तथा वि भणीअदि[10] सुदमंतसंरक्खणं[11] क्खु कज्ज-सिद्धीए कारणं[12] ।

च० त०—लट्ठीत्यत्र यष्ट्यां ल" इति लत्वम् । कलकण्ठी कोकिला ।

प्रा० प्र०—[संस्कृतच्छाया—तरङ्गिका] तादृशं, यादृशेन तवापि पुरतो मन्त्रयमाणाया अपि उत्कम्पत इव मे हृदयम् ।

तादृशम् अन्य-हृदयत्वम् । विअ इति "विअ वेअ अवधारणे" इति निपातः ।

[संस्कृतच्छाया—कुर] हृदय-निर्विशेषेऽपि आशङ्कमानां कौतूहलं मां प्रच्छयति ।

[संस्कृतच्छाया—तर] यथा तथा भवतु न प्रच्छादयिष्यामि । न हि स्नेहो युक्तायुक्तमनुरुणद्धि । इति काकुः ।

[संस्कृतच्छाया—कुर] अत एव मे आशङ्का, कथमिव सहकार-यष्ट्यां कलकण्ठी कुण्ठित-प्रणया भवति ।

[संस्कृतच्छाया—तर] एवं, तथापि भण्यसे, श्रुत-मन्त्र-संरक्षणं खलु कार्य-सिद्धेः कारणम् ।

---

1. V. r. Further uses of the participial adjectives from मंत: SupāsC., p. 535 and 307; AbhŚ., NSP. ed., p. 120. 2. V. r. no. वि । 3. V. r. no. विअ । 4. V. r. आसंकत्ति 5. V. r. विद्दावेदि । 6. V. r. जं वा तं वा 7. V. r. अणुरुज्झदि, अणुमोदि । 8. V. r. वणआ । 9. V.r. अत्थि एव्वं । 10. V.r. एवं भणीअदि । 11. V.r. मंतस्स रक्खणं । 12. V.r. लक्खणं ।

कुर । मा एव्वं भण, कधं विअ जीअंतादो किकलासादो मिग्गसुवण्णं पावीअदि[1] ।

तर । सुणादु[2] पिअसही । अत्थि एत्थ कुंतलेसुं[3] चंडमहासेणो णाम राआ, तस्स णिअ-राज्ज-परिब्भट्टस्स इह आगदस्स दुहिआ[4] कुवलयमाला[5] णाम णम्मदा-मज्जणुत्तिण्णा देव[6]-दिट्ठा हिअअं च सेपविट्ठा[7] । तां च पडिच्छिदवदी[8] देवी णिअ-मादुल-भावुकस्स[9] मिअंकवम्मस्स किदे ।

च० त०—"सरटः कृकलासः" इत्यमरः । शिरसि विद्यमानं सुवर्णं तद्वच्छोभमानं मांस पटलमिति यावत् ।

कुन्तलेषु देशेषु । "भावुकं कुशले क्लीबं भावुकस्तु प्रिये पुमान्" इति त्रिकाण्डी ।

प्रा० प्र०—[संस्कृतच्छाया—कुर] मैवं भण, कथमिव जीवतः कृकलासाच्छिरःसुवर्णं प्राप्यते । "मुक्ता भुजङ्गे च सरटे सुवर्णं रोचना गवी"ति प्रसिद्धेः ।

[ संस्कृतच्छाया—तर ] शृणोतु प्रिय सखी । अस्त्यत्र कुन्तलेषु चण्डमहासेनो नाम राजा । तस्य निज-राज्य-परिभ्रष्टस्य इहागतस्य दुहिता कुवलयमाला नाम नर्मदा-मज्जनोत्तीर्णा देव-दृष्टा हृदयञ्चास्य प्रविष्टा । ताञ्च प्रतीष्टवती देवी निज-मातुल-भावुकस्य मृगाङ्कवर्मणः कृते ।

भावुकः प्रिय इत्यर्थः, प्राणसुहृदिति यावत् । "वृत्तोऽपि भावुकः कोऽस्ति मम प्राण-सुहृद् भवानि"ति बुध-चरिते ।

---

1. V. r. cp. Rāmāyaṇa, uttara-kāṇḍa
   "अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् ।
   हिरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम् ॥
   स-हिरण्यं शिरो नित्यं भविष्यति तवाक्षयम् ।" इति—
2. V.r. सुणीअदु । सुणेउ, etc. vide PrāV., 3. 158.
3. V. r. कुंतलेशो । 4. V. r. सुदा ।
5. V. r. no णाम । 6. V. r. देवेण । 7. V. r. अ संपविट्ठा ।
8. V. r. पदिच्छिदवदी प्रति + इष् becomes पडिच्छ ; thus पडिच्छइ ; पडिच्छंति ; SupāsC., p. 39 and KalpaS., index.
9. V. r. चंदवम्म-सुदस्स । भावुक is a Deśī word meaning friend ; see SaṃkṣS., p. 47.

तण्णिमित्तं अ विवाहोवअरणाइं सज्जीकादुं पेसिदह्मि। तग्गदमणए मए ण तुमं लक्खिदासि[1]।

कुर। अहो देवीए विदद्धत्तणं[2] एव्वं किल किदे सवत्ती-लाभो परिहदो भोदि, चंदवम्म[3]-मादुलस्स सिणेहो वि दंसिदो भोदि।

तर। तुमं उण कहिं पत्थिदासि।

कुर। अज्ज देवीए अलिअ-विवाहेण विडंबिदुं आणत्तो[4] अज्ज-चाराअणो। तद्[5] विवाह-सामग्गीं संपादेदुं[6] उण अहं पेसिदा-म्हि[7]। ता एहि दुवे वि अह्मे जधा-समीहिअ-कज्ज[8]सिद्धीए गच्छह्म। ( इति निष्क्रान्ते )

प्रा० प्र०—तन्निमित्तञ्च विवाहोप-करणानि सज्जीकर्तुं प्रेषितास्मि। तद्गत-मनसा मया त्वं न लक्षितासि।

[संस्कृतच्छाया—कुर] अहो देव्या विदग्धत्वम्, एवं किल कृते सपत्नीलाभः परिहृतो भवति, चन्द्रवर्मणो मातुः स्नेहोऽपि दर्शितो भवति।

[संस्कृतच्छाया—कुर] त्वं पुनः क्व प्रस्थितासि ?

[ संस्कृतच्छाया—कुर ] अद्य देव्या अलीक-विवाहेन विडम्बयितुमाज्ञप्त आर्य-चारायणः, तद्विवाह-सामग्रीं संपादयितुं पुनरहं प्रेषितास्मि। तस्मादेहि द्वे अपि आवां यथा-समीहित-कार्य-सिद्धये गच्छावः।

समीहिअ इत्यत्र क-ग-च-ज-त-द-प-य-वां प्रायो लोप इति अकार-लोपः। समीहिद इति पाठे "तो द" इति तस्य दत्वम्।

1. V. r. पेक्खिदासि।
2. V. r, विअक्खणत्तणं।
3. V. r. देवस्स चन्दवम्म।
4. V. r. आरद्धो।
5. V. r. तस्स।
6. V. r. उप्पादेदुं।
7. V. r. no म्हि।
8. V. r. no कज्ज।

इति प्रवेशकः ।

( ततः प्रविशति सोत्कण्ठो राजा विशेष-विभूषितो विदूषकश्च ) ।

राजा । ( मदनाकूतमभिनीय )

तस्मिन् पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते
जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे ।
यस्यामीभिरितस्ततश्च विशिखैरापुङ्ख-मग्नात्मभि-
र्जातं मे विदलत्कदम्ब-मुकुल-स्पष्टोपमानं वपुः ॥१॥

( सन्तापमभिनीय )

विलीयेन्दुः साक्षादमृत-रस-वापी यदि भवेत्
कलङ्कस्तलत्यो यदि च विकचेन्दीवर-वनम् ।
ततः स्नान-क्रीडा-जनित-जड-भावैरवयवैः
कदाचिन्मुञ्चेयं मदन-शिखि-पीडा-परिभवम्[1] ॥२॥

च० त०—"प्रवेशकस्तु विज्ञेयो नीच-पात्र-प्रयोजित" इति रूपकादर्शोक्तेः[2] ।

तत इति "नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वे"ति लक्षणावश्यकत्वाद् राज-पात्र-प्रवेशे सूचनाभावः कवेः प्रमादः ।

विरह-बाधामभिनयति—तस्मिन्निति । भर्गेण महादेवेन । अक्षय-सायकम् अनन्त-शरम् । यस्य कामान्तरस्य । अमीभिः अक्षयैरिति यावत् । इतस्ततश्च सर्वतोऽपि । आपुंखं मूल-भाग-पर्यन्तं मग्नः प्रविष्टः आत्मा येषां तैः विशिखैः शरैः । मे वपुः विदलन्तो विकसन्तश्च ते कदम्बाः नीप-वृक्षाः तेषां मुकुलैः कुड्मलैः सह स्पष्टम् उपमानम् उपमा यस्य तत् । तथा च उत्तरोत्तर-पुलकितं जातमिति भावः ।

विलीयेति । इन्दुश्चन्द्रः । विलीय लीनो भूत्वा । तत्रत्यः इन्दु-भवः । कलङ्कश्च

---

1. V. r. व्यतिकरम् ।

2. Cp. See also NātS., 21. 112-114, p. 246; Das 'R., 1. 60, p. 32 ; Sahdav., 6. 57, p. 293;

अपि च, सखे चारायण !

> मन्दादरः कुसुम-पत्रिषु पेलवेषु
> नूनं बिभर्ति मदनः पवनास्त्रमद्य ।
> द्वार[1]-प्रकाण्ड-सरलाः कथमन्यथाऽमी
> श्वासाः प्रनर्तित-दुकूल-दशाः सरन्ति ॥३॥

तत् फुल्लातिमुक्त-लता-लाञ्छनस्य[2] तुषार-पुञ्ज-नाम्नः कदली-गृहस्य मार्गमादिश[3] ।

विदूषकः । ( संज्ञया निर्दिशति ) ।

च० न०—वनम् । भवेत् इत्यनुषङ्गः । यदि चेत् । ततः वाप्याः । जड-भावैः शिशिरत्वैः । अवयवैः उपलक्षितः, अहमित्यर्थात् सिद्धम् । मदन एव शिखी अग्निः तस्मात् पीडा बाधा तस्याः परिभवं तिरस्कारं, मुञ्चेयं परित्यजेयम् । तथा च कलङ्कीन्दु-रूप-द्रवकारीन्दी-(?)वरायाममृत-वाप्यां स्नानेन शिशिरः सुखी भवामीत्यसंभावितोत्प्रेक्षा ॥२॥

मन्देति । [कुसुम-]पत्रि[षु] पुष्प-बाणेषु मन्द आदरो मर्यादा यस्य । अन्यथा एवं न चेत् । द्वारयोर्नासा-रन्ध्रयोः प्रकाण्डं प्रशस्तम् यथा तथा सरलाः अकुण्ठिताः अमी श्वासाः प्रनर्तिताः दुकूल-दशाः क्षौम-प्रान्ताः यैस्ते । "दशा कच्छाञ्चले"ति जयः । कथं सरन्ति गच्छन्ति । एतेन श्वासानां विरह-भारादतिदैर्घ्यं लक्ष्यते ॥३॥

अतिमुक्त-लतैव लाञ्छनं चिह्नं यस्य । तुषाराणां शीत-गुणानां पुञ्जो राशिर्यत्र तन्नाम्नः कदली-युक्त-गृहस्य । आदिश दर्शयेति यावत् । शीतोपचारायेति भावः ।

संज्ञया अङ्गुल्यादिसंज्ञया ।

प्रा० प्र०—प्रकाण्ड-शब्दः प्रशस्त-वाचकः ॥३॥

"अतिमुक्तः पुण्ड्रकः स्यादि"त्यमरः ।

---

1. V. r. हार । 2. V. r. लताच्छन्नस्य । 3. V. r. आदेशय ।

राजा। केयमक्षुण्णा मौन-मुद्रा?

विदूषकः। ( भूमावक्षराणि लिखति )।

राजा। अष्टादश-लिपि-विदो वयं न त्वदीयाक्षर-ग्रहणे[1] विचक्षणाः।

विदूषकः। ( दन्तैर्जिह्वामवष्टभ्य ) भो! दिक्खिदः क्खु अहं[2] मउणे चिट्ठामि।

राजा। किमिति?

विदूषकः। देवी मं संपदं[3] परिणाइस्सदि।

राजा। तामेव चिरन्तन[4]-ब्राह्मणीम्।

विदूषकः। णहि णहि[5]।

राजा। अन्या का[6]?

विदूषकः। ओअल्लागदस्स मिअंक-वम्मस्स पुरोहिदस्स[7] दुहिदा क्खु एसा[8]।

च० त०—अक्षुण्णा अभग्ना।

अष्टादश-द्वीपेषु एकैकत्वेन अष्टादश लिपय इति भावः। ग्रहणे परिज्ञाने।

अवष्टभ्य सन्दश्येति यावत्।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] दीक्षितः खल्वहं मौने तिष्ठामि।

[ संस्कृतच्छाया—विदूषकः] देवी मां साम्प्रतं परिणाययिष्यति।

[ संस्कृतच्छाया—विदूषकः ] नहि नहि।

[ संस्कृतच्छाया—विदूषकः ] ओयल्लागतस्य मृगाङ्क-वर्मणः पुरोहितस्य दुहिता खल्वेषा। ओअल्लः प्रीतिः। केचित् लाट-देशेषु......ल-नामकं नगर-स्थानमद्यापि खिलीभूतं वर्तत इति वदन्ति। अत एव "पुरा यत्र स्रोतः" इति भवभूतिः।

---

1. V. r. no ग्रहणे। 2. V. r. दिक्खिदोहं। 3. V. r. संपदं ज्जेव।
4. V. r. चिरन्तनीं। 5. V.r. णहु णहु, ण क्खु ण क्खु।
6. V.r. तदन्या का। 7. V. r. पुरोहिद। 8. V. r. सा।

राजा । किं-नामधेयः पुरोहितः ?

विदूषकः । सस-सिंगो,[1] घरिणी इमस्स[2] मिअ-तिह्णिआ, भविस्स-घरिणी अ मे[3] तद्[4]दुहिदा अंबर-माला णाम ।

राजा । ( स्वगतम् ) मन्ये देवी उपहसितुमेनमिच्छति । तज्जोषमास्महे । वर्धतां परिहास-लता[5] ।

( ततः प्रविशति चेटी ) ।

(परिक्रम्य पुरतोऽवलोक्य) कधं एस देवो चाराअण-बह्मणेण समं कोदूहल-घरस्स[6] तुसार-पुञ्जस्स संजवण[7]-सण्णिहिदो वट्टदि। ता विण्णवेमि देवी-संदिट्ठं । ( उपसृत्य ) जअदु जअदु

च० त०—किं नाम-धेयं यस्य ।

शशस्येव शृङ्गे विषाणे यस्य। तयोः मृग-तृष्णिका-शश-शृङ्गयोर्दुहिता अम्बर-माला गगनारविन्द-मालेति यावत् ।

जोषं तूष्णीमिति शब्द-माला । लता परम्परा ।

चेटीप्रवेशासूचनं प्रमादः । एसो इत्यत्र "शषोः स"[8] इति सत्वम् । समं सह ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] शश-शृङ्गः, गृहिण्यस्य मृग-तृष्णिका, भविष्यद्-गृहिणी च मे तद्दुहिता अम्बर-माला नाम ।

[ संस्कृतच्छाया—चेटी ] कथमेष देवश्चारायण-ब्राह्मणेन समं कौतूहल-गृहस्य तुषार-पुञ्जस्य सञ्जवन-सन्निहितो वर्तते ? तस्माद् विज्ञापयामि देवी-सन्दिष्टम् । जयतु जयतु

---

1. V. r. सससिङ्गो नाम । 2. V. r. जणणी उण ।
3. V. r. से । 4. V. r. no. तद् ।
5. V. r. cf. NA. act 3, the tricK played on the Vidusaka. ctc.
6. V. r. कोदूहल-किदस्स, कोदूहल-करस्स 7. V. r. ज्जेव ।
8. PP., 2, 43, p. 51.

भट्टा। देवी विण्णवेदि, चाराअणो मए[1] दुदीअं[2] परिणाइदु-माणत्तो[3] ता तुह्मेहिं चाराअण-मित्तकेहिं[4] होदव्वं। एदं च कोदूहल-घलं[5] कदं कदली-घलं पविसदु[6] देवो। देवी सपरि-अणा [7]इदो ज्जेव[8] वट्टदि ( इति प्रवेशं नाटयति )।

( ततः प्रविशति देवी कृत-वधूटी-वेषश्चेटो विभवतश्च परिवारः )।

देवी। हला मेहले! अत्तणो जामादुअस्स कुणसु[9] मुहावलोअणं।

च० त०—भवितव्यमागन्तव्यमित्यर्थः। कौतूहलं विवाह-रूपम्। कदली-गृहम् तस्य मार्ग एवेति भावः। यथा-शब्दस्य उत्तर-वाक्यस्थतया तथा-शब्दस्यानिर्देशः[10]।

प्रविशति। चेट-परिवारयोरप्यनुषङ्गः।

प्रा० प्र०—भर्ता। देवी विज्ञापयति, चारायणो मया द्वितीयां परिणाययितुम् आज्ञप्तः। तद् युष्माभिश्चारायण-मित्रकैर्भवितव्यम्। एतच्च कौतूहल-गृहं कृतं कदली-गृहं प्रविशतु देवः। देवी स-परिजना इत एव वर्तते।

"अभ्यन्तरे सज्जवनमि"ति हैमः।

[ संस्कृतच्छाया— देवी ] हला मेखले, आत्मनो जामातृकस्य कुरु मुखावलोकनम्।

अत्र यद्यपि "पितृ-भ्रातृ-जामातॄणामर" इति शासनात् जामाअरस्सेति वक्तव्यं तथापि "शेषः संस्कृतादि"ति सूत्रेण जामादुअस्सेति दयनीयः प्रयोगः कृत इति केचित्, प्रमाद इत्यन्ये।

---

1. V. r. no मए।
2. V. r. दुदीअ-विआहे।
3. V. r. विआहिदुमारद्धो, विआहिदुमाढत्तो।
4. V. r. वर-इत्तकेहिं।
5. V. r. एदस्स ज्जेव्व एक्काए गेहिणीए।
6. V. r. ता पविसदु।
7. V. r. तहिं।
8. V. r. no ज्जेव।
9. V. r. कुणीअदु जामादुणो।
10. Note in J. v.

मेखला। ( तथा विधाय शिरसि चाघ्राय )। अज्ज चाग-अण ! उवरि धेसु[1] रत्तंसुअं कुणसु तारा-मेलणं[2]।

विदूषकः। ( तथा करोति )।

देवी। मेहले ! तुरिदं देवावेसु[3] भामरीओ, जेण [4]पज्जलिदे हुदवहे लाअंजलीओ मुंचेदि[5]।

विदूषकः। [ तथा कृत्वा ] अयि[6] दुदीअ-बह्मणि धुवं सत्त-रिसि-मंडलं च पेक्ख[7]।

चेटः। (विलोक्य) दिट्ठ-धुओ[8] दिट्ठ-सत्तरिसि-मंडलो अ संवुत्तोह्मि।

च० त०—अंशुकं पट्ट-वस्त्रमिति भावः। ताराणां मेलनं परस्पर-वीक्षणम् "चक्षू-राग-स्तारा-मैत्री"ति स्मरणात्। "तारकाऽक्ष्णः कनीनिके"त्यमर-व्याख्यायां स्वार्थे क इति योगानन्द-चूडामणी।

मुञ्चति मिथुनमिति शेषः।

प्रा० प्र०—[ संस्कृतच्छाया—मेखला ] आर्य चारायणोपरि धेहि रक्तांशुकं, कुरु तारा-मेलनम्।

[संस्कृतच्छाया—देवी] मेखले, त्वरितं दापय भ्रामर्यः। येन प्रज्वलिते हुतवहे लाजाञ्जलिं मुञ्चति।

भामरीओ इति प्रदक्षिण-वाचको देशीयः शब्दः।

[संस्कृतच्छाया—विदूषकः] अयि द्वितीय-ब्राह्मणि, ध्रुवं सप्तर्षि-मण्डलञ्च पश्य।

[ ,, ,, —चेटः ] दृष्ट-ध्रुवो दृष्ट-सप्तर्षि-मण्डलश्च संवृत्तोऽस्मि।

---

1. V. r. अवणेसु।
2. V. r. मेलअं।
3. V. r. दावेसु।
4. V. r. पज्जलिदे, पज्जलदि।
5. V. r. मुञ्चंति।
6. V. r. no अयि।
7. V. r. पेच्छ।
8. V. r. दिट्ठ-ध्रुओ।

विदूषकः । अयि मुद्धे ? दिट्ठ-धुआ दिट्ठ-सत्तरिसि-मंडला अहं[1] त्ति भण

( चेट-विदूषकौ पुनः पुनस्तथाऽभिदधतः ) ।

चेटः । अज्ज चाराअण ! देवी-दासो डमरुओ[2] क्खु अहं कहं[3] परिणआणि[4] । ण सुणीअदि दीवंतरे वि एसा वत्था जं पुरिसो पुरिसं परिणेदि इत्थिआ वा[5] इत्थिअं । अंबर-माला उण अंबर-माला ज्जेव ।

विदूषकः । आः दासीए सुदे[6] ! पुराण[7]-कुट्टिणि ! मगर-दाढे[8] ! भमर-टेण्टे[9] ! तण्टा-कराले[10] ! कोस-वडिढणि[11] !

च० त०—तथा मुग्धे इत्यादिकमेवेति भावः ।

इत्थिअं इति स्त्री-वाचको निपातः । अम्बर-माला मृषैवेत्यर्थः ।

पुराण-कुट्टिनि "कुट्टिनी संभली समे" इत्यमरः ।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] अयि मुग्धे, दृष्ट-ध्रुवा दृष्ट-सप्तर्षि-मण्डला च अहमिति भण ।

[ संस्कृतच्छाया—चेटः ] आर्य चारायण, देवी-दासो डमरुकः खल्वहं कथं परिणयानि । न च द्वीपान्तरेऽपि एषा वार्ता यत् पुरुषः पुरुषं परिणयति स्त्री वा स्त्रियम् । अम्बर-माला पुनरम्बर-मालैव ।

[ संस्कृतच्छाया—विदूषकः ] आ दास्याः सुते, पुराण-कुट्टिनि, मकर-दंष्ट्रे, भ्रमर-टेण्टे,

---

1. V. r. संवुत्ताह्मि ।
2. V. r. बंधुलो ।
3. V. r. तुए ।
4. V. r. परिणयामि ।
5. V. r. च ।
6. V. r. पुत्तिए ।
7. V. r. no पुराण ।
8. V. r. no मगर-दाढे ।
9. V. r. भमरिणि, ब्भमरिणि ।
10. V. r. टेटे टेण्टाकारिणि ।
11. V. r. no कोसवड्ढिनी ।

रच्छा-लोडिणि[1] ! लुडिद[2]-संघलिदे ! परपुत्त-विद्दाविणि[3] ! विसम-कत्तरि ! वञ्चिदह्मि[4] तुए, ता रक्खिअस्स[5] अत्ताणं ।

( सर्वे हसन्ति ) ।

विदूषकः । ( अपक्रामति[6] ) ।

राजा। देवि ! विलक्षः[7] क्रुद्धश्चारायणः कुवलय-वीथीं[8] प्रतिगतः । अस्माभिरपि गन्तव्यम् । तत् केनचित् कर्पूरद्वीपादागतेन नरेन्द्रेण सिद्धौषधैर्माधवी[9]-लता-मण्डपो माञ्जिष्ठस्तव-

च० त०—भ्रमरवन् टेण्टे चपले । तंटा-कराले परापवाद-दारुणे । रथ्या इत्यत्र "त्य-थ्य-द्यानां चछजा" इति छत्वम् । "रथ्या तु रथवीथिके"ति हेमचन्द्रः । पर-पुत्रान् विद्रावयतीति तथोक्ता, कातरि इति महाराष्ट्राः ।

"अपक्रामत्यपयाति गच्छती"ति माठरः ।

विलक्षो विस्मयान्वितः । "जम्बू-शाल्मलि-कर्पूरा" इति, "जांगलिको नरेन्द्र" इति वस्तुनिर्णय-हारावल्यौ । पूर्वं दृष्टं न भवतीत्यदृष्टचरम् ।

प्रा० प्र०—तण्टा-कराले, कोश-वर्धिनि, रथ्या-लोटिनि, लुटित-संघटिते, पर-पुत्र-विद्राविणि, विषम कर्तरि, वञ्चितोऽस्मि त्वया ? तस्माद्रक्षाऽऽत्मानम् ।

कुट्टिनि सम्भलि । मकर-दंष्ट्रे दुर्वारे इत्यर्थः । टेण्टा चपला, देशीयोऽयं शब्दः । तण्टा-कराले । परापवाद-वाचकः तण्टा-शब्दो महाराष्ट्रेषु प्रसिद्धः । कदाचित् कविभिर्भाषान्तरमपि प्रयुज्यते । अत एव मणत्वरपरमिति व्यासः । सौन्दर्य-लहर्यां वालिति भगवत्-पादाः । "वितेनुरिङ्गालमि"ति श्रीहर्षः । **कोशवर्धिनि** व्यभिचारिणीति यावत् ।

**नरेन्द्रो** विषवैद्या ।

---

1. V. r. no रच्छालोडिणि ।
2. V. r. दुट्ठ ।
3. V. r. no पर-पुत्त-विद्दाविणि ।
4. V. r. छलिदह्मि ।
5. V. r. रक्खिज्जसु ।
6. V. r. परिक्रामति ।
7. V. r. विलक्षणः ।
8. V. r. कुवलयवर्तीं, वकुल-वीथीं ।
9. V. r. सिद्धौषध-माधवी ।

कालङ्कृतः कृतस्तदट्टष्टचरं[1] चरितमवलोकयितुं प्रिय-वयस्यमावर्ज-यितुं च गच्छामः। त्वं पुनस्तदद्भुतं प्रदोषे द्रक्ष्यसि[2]।

देवी। कुरंगिए! देवता-दुदीअस्स अज्ज-पुत्तस्स[3] पास्स-वत्तिणी[4] होहि ( इति सपरिवारा निष्क्रान्ता )।

कुर। ( परिक्रामितकेन ) इदो[5] अज्ज-चाराअणो मालदी[6]गुम्मन्तरे बन्दी[7] विअ मुह-मेत्त-णिलुक्को[8] चिट्ठदि।

राजा। तदानयैनम्।

कुर। (किञ्चिदुपसृत्य ) भो! अम्बर-माला-वह्लह! देवो वाहरदि ( इत्यञ्चले कर्षति )।

च० त०—आवर्जयितुं समाधातुम्। प्रदोषे रजनीमुखे।

"इदं परिक्रामितकं गमनं यत् पदान्तर" इति नाट्य-पद्धतिः।

गुल्मान्तरे स्तम्ब-मध्ये। गुम्मेत्यत्र "सर्वत्र लवरा"मिति ल-लोपः। मुख-मात्रे निर्लोकः। "निर्लोकस्तु प्रकाश" इति त्रिकाण्डी।

व्याहरति आह।

प्रा० प्र०—[ संस्कृतच्छाया—देवी ] कुरङ्गिके, देवता-द्वितीयस्याऽऽर्यपुत्रस्य पार्श्व-वर्तिनी भव।

देवता-द्वितीयः एक इति भावः।

[संस्कृतच्छाया—कुरङ्गिका] इत आर्य-चारायणो मालती-गुल्मान्तरे वन्दीव मुख-मात्र-निर्लोकस्तिष्ठति।

वन्दी शत्रु-गृहीत-जनः। निर्लोकः प्रकाशः।

[संस्कृतच्छाया—कुरङ्गिका] भो अम्बर-माला-वल्लभ, देवो व्याहरति।

---

1. V. r. अदृष्ट-पूर्वं।
2. Cf. RV., act 2, p. 27, magic powers of Śrikhaṇḍadāsa.
3. V. r. देवस्स।
4. V. r. पास्सपडिवत्तिणी।
5. V. r. अत्र।
6. V. r. णोमालिआ।
7. V. r. बरही।
8. V. r. निलिणो।

विदूषकः । आः दुट्ठ-दासि ! भविस्स-कुट्टिणि[1] ! तुमं पि मं उअहससि, ता अमुणा[2] तुह्म-देस-जण-मण[3]-कुडिलेण दण्ड-कट्ठेण सीसं[4] त्ति[5] ताडइस्सं ।

राजा । कुरङ्गिके ! देवीमनुवर्तस्व, तत्परिवारे कुरङ्गगायणः ।

कुर । ( निष्क्रान्ता परिक्रामितकेन ) ।

विदूषकः । पिअ-वअस्स-विणोदत्थं महामन्ति-कारिदा रअण-वदी णाम पुरदो[6] चउक्किआ । कि उण ताए[7] वि एसा[8] अधिदेवदव्व[9] ।

राजा । ( विलोक्य स्वगतम् ) हृदय ! दिष्ट्या वर्धसे स्वप्न-दृष्ट-जन-प्रत्यक्ष-दर्शनेन । (तं प्रति) सखे चारायण ! सैवेयम्

च० त०—भविष्यती चासौ कुट्टिनी ।

अनुवर्तस्व गच्छ इति चमत्कारोक्तिः, स्व-सन्दर्भ-पूर्वकं यदृच्छा-विहारायेति भावः ।

चतुष्किकेति । एतेन "रत्न-चतुष्किकां करिष्यतामि"ति प्रथमाङ्क-शुद्ध-विष्कम्भ-पूर्तावुपक्षिप्तं संविधानं सूक्ष्म-बुद्धिभिरूह्यम् ।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] आ दुष्ट-दासि, भविष्यत्-कुट्टिनि, त्वमपि मामुपहसमि, तस्मादमुना युष्मद्देश-जन-मनः-कुटिलेन दण्ड-काष्ठेन शीर्षन्तडिति ताडयिष्यामि ।

[संस्कृतच्छाया—विदूषकः] प्रिय-वयस्य-विनोदार्थं महामन्त्रि-कारिता रत्नवती नाम पुरतश्चतुष्किका । किं पुनस्तस्यामप्येषाऽधिदेवतेव ।

वट्टदि इति शेषः । वर्तत इत्यर्थः ।

1. V. r. कुट्टणी ।
2. V. r. no. अमुणा ।
3. V. r. तुह्मारिस-जन-हिअअ ।
4. V. r. no सीसं ।
5. V. r. झत्ति ।
6. V. r. no पुरदो ।
7. V. r. कीए ।
8. V. r. no एसा ।
9. V. r. सदेवदव्व ।

अपि चास्याः खलु लक्षयामि तामिव वयोऽवस्थामलंकुरुते, यस्यां दिवानिशमभिनवाकल्प-विकल्प-गत-मानसा तिष्ठति। तथाहि[1]—

उत्तालालक-भञ्जनानि कवरी-भारेषु[2] शिक्षा-रसो[3]
दन्तानां परिकर्म नीवि-नहनं[4] भ्रू-लास्य-योग-ग्रहः[5]।
तिर्यग्लोचन-चेष्टितानि वचसां छेकोक्ति-संक्रान्तयः
स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलि-क्रमः ॥५॥

च० त०—अवस्थां दशाम्। अवस्थामलङ्करोतीति ध्वनिः। दिवानिशम् अहोरात्रम्। अभिनवाश्च ते आकल्पाः वेषाः। साज इति महाराष्ट्राः। तेषां विकल्पाः एवं कार्यमित्थं वा कार्यमिति विचाराः। तेषु गतं मानसं यस्याः। तत्-प्रकारं विशिनष्टि—तथाहीति।

उत्तालाः उन्नम्राश्च ते अलकाः चूर्णकुन्तलाः तेषां भञ्जनानि कङ्कतिकादिभिः समी-करण-रूपाणि। "उत्ताल उन्नम्र" इत्यगस्त्यः। कवरीणां केश-पाशानां भारेषु घनीभावेषु विषये शिक्षायै किंच-वक्रिम-दैर्घ्य-नैल्य-चाक-चक्य-परिमलादि-रूपायै रसः तत्तद्गुण-विधायक-तैल-विशेष-रूपो द्रवः। "गुणे रागे द्रवे रस" इत्यमरः[6]। दन्तानाम् अन्तरेषु इति शेषः, परिकर्म नैल्य-दार्ढ्यमापादकौषध-भेदः। "परिकर्म स्त्री-दन्तालङ्करणौषध" इति जयः। दान्त-सीणा इति महाराष्ट्राः। नीवीनां नहनं बन्धनं "नीवि-मोक्षो ह्री"त्युत्तराहाः। भ्रूषु लास्यं भाव-सूचक-नर्तन-रूपम् तस्मिन् योगः युक्तिः तस्याः ग्रहः ग्रहणं स्वीकरणमिति यावत् "योगो युक्तिष्वि"त्यमरः। तिर्यक् तिरश्ची-नतया वक्रतयेति यावत्, लोचनानां चेष्टितानि वलनानि। 'तिर्यग्लोचने'ति सन्धि सङ्कटं

प्रा० प्र०—उत्ताला उन्नम्राः। नहनं बन्धनम्। छेको विदग्धोक्तिः ॥५॥

1. V. r. no तथाहि।
2. V. r. पाशेषु
3. V. r. लाक्षा-रसो
4. V. r. वहनं
5. V. r. योग्याग्रहः।
6. III, 3, 228, p. 222.

विदूषकः। ( आकारमाकलय्य सोपहासम् ) भो[1] एहि इदो[2] भवीअ देवीए सआसं[3] गच्छह्म।

राजा। सखे ! पश्यामस्तावत्।

विदूषकः। किं तुमं गण्ठि-बधिरो[4] विअ ठाणे[5] थक्कसि[6]

च० त०—"प्रीति-योगात् स्थितमिवे"ति[7] "प्रावृड्वासरे"ति मुद्रा-राक्षसानन्त-कवि-प्रयोग-वद्दयनीयम्। वचसां वचनानां प्रकटन इति शेषः। छेकोक्तीनां विदग्धोक्तीनाम् "छेको विदग्धे वक्रे चे"ति नाममाला। संक्रान्तयः संक्रमणानि मेलनानि चेति, प्रादुर्भवन्तीति शेषः। अत्र [यद्यपि] "उक्तिर्दच" इत्यमरसिंहेनाभिधानात् पुनरुक्तिस्तथापि वचसां प्रश्न-रूपाणाम् उक्तयः प्रत्युक्ति-रूपा इति दयया समाधेयम्, "प्रमादो धीमतामपी"ति न्यायात्। अत एव "कृतावमरसिंहस्य" इति "प्रतीक्ष्योऽर्च्यः सांशयिकः" इति च वक्तुं "इत्यमरसिंह-कृतावि"ति, "पूज्यः प्रतीक्षः सांशयिकः" इति च मात्रा-न्यूनत्व-नवाक्षरत्व-रूपं दोष-द्वयं निजमजानन् भगवत्-पादाङ्गीकृतोऽमरसिंहोऽपि बभ्राम। नन्वमी सप्त विलासाः कासां कस्मिन् सतीत्यत आह—स्त्रीणामिति। शैशवे बाल्ये म्लायति गच्छति सति। स्त्रीणां स्त्री-मात्राणाम्। प्रतिकलम् अनुक्षणम्। कोऽप्यनिर्वाच्यः। एष उक्त-प्रकारः। केल्या लीलायाः क्रमः पद्धतिः। "क्रमः पर्याय-पद्धत्योरि"ति वामनः ॥५॥

आकारं पारवश्य-रूपमिङ्गितम्, राज्ञ इति शेषः। "आकारस्त्विङ्गिताकृती"ति शब्दार्णवः। आकलय्य ज्ञात्वा।

अशृण्वन्तं राजानमाह किमिति। "एष कृष्ण तव ग्रन्थि-बधिरो गुण-संश्रुतावि"ति

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] भो एहि इतो भूत्वा देव्याः सकाशं गच्छावः।

[ संस्कृतच्छाया—विदूषकः ] किं त्वं ग्रन्थि-बधिर इव स्थाने स्खलसि। ग्रन्थि-बधिरः जाति-बधिरः। "ग्रन्थिर्जातावतिशये पर्वाङ्गे दृढ-बन्धन" इत्यमर-माला। थक्क-शब्दो देशीयः।

---

1. V. r. no भो 2. V. r. पुरदो 3. V. r. देवी-सआसं
4. V. r. गलिबइल्लो ; गलिअरिल्लोव्व अधुव्वह-बलीवद्दो।
5. V. r. ठाणे ठाणे। 6. V. r. शशन्तो भवसि।
7. MudrāR., II. 14.

ता गुडूची-दंडोव्व[1] भवं इध ज्जेव दाड्ढधरो भोदु[2] । अहं उण देवीए सआसं गच्छेह्मि ।

राजा । सर्वं सम्भाव्यते त्वयि । किं मधु कषायति[3] ?

विदूषकः । (विहस्य पुरोऽवलोक्य च) भो उप्फाल-समुप्फालनाई[4] करेहिं[5] लग्गा[6] ।

च० त०—कृष्ण-चरिते डिण्डिमः । "रूढ-मूलस्त्वनुत्पाट्यो गुडूची-दण्डवद्रिपुरि"ति दण्डि-काव्ये ।

गमनं न युक्तमित्याह सर्वमिति । संभाव्यत इति काकुः न सम्भाव्यत इत्यर्थः, गमनमिति शेषः । अस्या दर्शनं विहाय नैव गन्तव्यमिति भावः । ननु कियच्चिरमस्या दर्शनं मास्तु । तद्‌गच्छामि इत्याशक्य नात्र कदाप्यरुचिरित्याह किमिति । मधु माक्षिकं कषायवदाचरति कषायति किम् । नैव कषायतीत्यर्थः । यथा मधु मधुरम् तथाऽस्या दर्शनमपि मधुरमेवेति भावः ।

विहस्येति । कियानभिनिवेश इति भावः ।

अथ "सा कन्दुकैः...रेमे" इति कालिदास-वचनेन[7] स्त्रीणामपि खेलने संप्रदायात् क्रीडनं प्रक्रमते भो इति । "अर्थात् प्रकरणाल्लिङ्गादौचित्यादर्थनिर्णय" इति न्याय-बलात् उत्फाल-शब्दः प्रथमोत्पतन-वाचकः समुत्फालन-शब्दोऽनन्तरोत्पतन-वाचकः । उत्फालाश्च समुत्फालनानि च । देशीयौ शब्दौ । उत्फालना इति महाराष्ट्राः[8] । करयोर्लग्नानीति आत्मन्यज्ञानारोप-विनोदः कृत इत्यूह्यम् ।

प्रा० प्र० —[संस्कृतच्छाया—विदूषकः] तस्माद् गुडूची दण्ड इव भवानिहैव दार्ढ्यधरो भवतु । गुडूची-दण्ड इव क्षिप्रमनुत्पाट्य इति परिहासोक्तिः । "गुडूची तन्त्रिका ऽमृता" इत्यमरः । दण्ड इत्यत्र "दोला-दर्शन-दण्डेषु" इति डत्वम् । अहं पुनर्देव्याः सकाशं गच्छामि ।

कषायवदाचरति कषायति । इमां पश्यन्निहैव वसामीति भावः ।

[ संस्कृतच्छाया—विदूषकः ] भो उत्फाल-समुत्फालनानि करयोर्लग्नानि ।

---

1. V. r. गुडूची-दंडो विअ । 2. V. r. इधज्जेव परोहदु ।
3. V. r. मधुर्न कुसुमयति 4. V. r. उप्फाल-संफालाइं 5. V. r. करेदुं, कादुं
6. V. r. पउत्ता । 7. KS. II. 29. 8. Moles., p. 102

राजा ( विहस्य ) कन्दुकेन क्रीडति । तथाहि—

अमन्द-मणि-नूपुर-क्वणन-चारु-चार-क्रमं[1]
झणज्झणित-मेखलं[2] स्खलित-तार-हारच्छटम् ।
इदं तरल-कङ्कणावलि-विशेष-वाचालितं
मनो हरति सुभ्रुवः किमपि कन्दुक-क्रीडितम्[3] ॥६॥

विदूषकः । एवं एदं[4] ।

चंचल-चलण-चण्ड-चार-क्कम-चलिद-चेलअं[5]
अविरल-वेणि-वेल्लिद-भल्ल-वलन-धुद-विअसिद-मल्लिअं[6] ।

च० त०—क्रीडनं विशदयति—तथाहीति । अमन्दं महत् यन्मणि-नूपुरयो रत्न-मञ्जीरयोः क्वणनं शब्दः तेन चारुर्मनोज्ञः चार-क्रमः सञ्चारस्य रीतिर्यस्मिन् तत् । "संञ्चारश्चरणं चार" इति त्रिरूपः । झणज्झणिता सञ्जात-किङ्किणी-झणझण-शब्दा मेखला काञ्ची यस्मिन् । स्खलितेति ध्वनिः । "तारोऽत्युच्चैर्महानपी"ति नन्दी । छटा जाटीति महाराष्ट्राः[7] । क्रीडनातिशयात् तरलानां कङ्कणानाम् आवलिभिः विशेष-वाचालितं भूयः सञ्जात-वाचाल-गुणं शब्दायमानमिति यावत् । किमपि जगद्-साधारणम् । सुभ्रुवः कन्दुकेन साधनेन क्रीडितं क्रीडनम् । मनः कर्म, ममेति शेषः । हरति परवशीकरोति ॥६॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] एवमेतत् ।

चञ्चल-चरण-चण्ड-चार-क्रम-चलित-चेलकं
अविरल-वेणि-वेल्लित-भल्ल-वलन-धुत-विकसित-मल्लिकम् ।

---

1. V. r. चारि-क्रमं । 2. V. r. झणज्झणित-मेखला ।
3. V. r. क्रीडनम् । 4. V. r. णेदं ; ज्जेव ।
5. V. r. चंचल-चलन-वल्लि-वक्किम-वेल्लिद-चोल-अञ्चलं
6. V. r. वेल्लिर-वेणि-वल्लिह-लावण-धुअ-विअइल्ल-मल्लिअं ;
वेल्लिद-वेणी-वल्लि-हेलावणद्ध-विअलिअ मल्लिअं ।
7. Moles, p. 298.

मोहइ[1] घण-रणंत-रसणा-मणि-किंकिणी-चअं[2]

चंद-मुहीए रअण-रंगंगणे[3] गेंदुअ-केलि-तांडवं[4] ॥७॥

राजा ।

अस्याः स्वेदाम्बु-विन्दु[5]-च्युत-तिलकतया व्यक्त-वक्त्रेन्दु-कान्ते-

र्वारंवारेण वेग-प्रहणन-नटना-केलि[6]-वाचालितायाः ।

तत्-पातोत्पात-तानोन्नत-विनत-दृशस्ताडनोत्ताल-लीला[7]-

लालित्याच्छन्दिताः स्मः प्रतिपदमधुना[8] कन्दुक-क्रीडितेन ॥८॥

च० त०—भङ्ग्यन्तरेणाह चञ्चलेति । चण्डः उद्धतः । चेलकं वस्त्रम् । वेण्यां वेल्लिताः प्रेङ्खिताश्च ते भल्लाः "वेणीचेनग" इति महाराष्ट्राः । तेषां वलनेन चलनेन धुनास्त्यक्ताः । रशना काञ्ची । चयः समूहः । रङ्गः सभा । केलिः क्रीडैव ताण्डवं नटनम् । "गेन्दुकः कन्दुक" इत्यमरः[9] । वेविर-वेणीति पाठे दीर्घ-वाचको वेविर-शब्दो देशीयः ॥७॥

विशेष-दशाया वर्णयति—अस्या इति । अधुना सम्प्रति तिलकतया हेतुना । चान्दा[10] चान्दला[11] इति टिकली[12] इति च तिलक-द्वये महाराष्ट्राः । व्यक्ता निष्कलंकतया

प्रा० प्र०—शोभते घन-रणद्रशना-मणि-किङ्किणी-चयं

चन्द्र-मुख्या रत्न-रङ्गाङ्गणे कन्दुक-केलि-ताण्डवम् ॥

वेण्यलङ्कार्य-मणि-खचित-कनक-भूषण-विशेष-वाचको भल्ल-शब्दो देशीयः ॥७॥

वारंवारेणेति प्रामादिकः प्रयोगः । तानेति "तानन्तु स्वर-भेदे स्यात्तथा रोहावरोहयोरि"ति यादवः । उत्तालम् उच्छृङ्खलम् । छन्दिताः वशीकृता इति यावत् ॥८॥

---

1. V. r. रेहइ । 2. V. r. रहइ घण-घण-रणंत-रसणावलि-किंकिणी-कंकणुच्चअं ।
3. V. r. मअण-रंगंगणे । 4. V. r. तंडवं ।
5. V. r. विम्ब । 6. V. r. गणना-केलि ।
7. V. r. तत्पातोत्थान-ताल-क्रम-नमित-दृशस्ताण्डवोत्ताल-ताली ।
8. V. r. लालित्याक्षोभिताः स्मः प्रतिकलमधुना ।
9. V. r. AK. II, 6. 138, p. 112. 10. Moles., p. 227., also चांदा
11. Op. cit. 12. Moles., dim of टिकला, pp. 339-40.

( भूयो विभाव्य ) अहह ! महता वेगेन वर्तते । तथाहि[1]

चेलाञ्चलेन चल-हार-लता-प्रकाण्डै-
र्वेणी-गुणेन च बलाद्वलयीकृतेन[2] ।
हेलाहित-भ्रमरक-भ्रमि[3]-मण्डलीभि-
श्चक्र-त्रयं[4] रचयतीव चिरं नत-भ्रूः ॥९॥

च० न०—प्रकटा वक्त्रेन्दुकान्तिः मुख-चन्द्र-द्युतिः यस्याः । वारंवारणेति कवेः प्रमादः । वारं वारमिति प्रयोक्तुभावः । "वारं वारं पुनः पुनः" इति गोवर्धनः । वारं वार इति महाराष्ट्राः[5] । वेगेन प्रहणनं कन्दुके ताडनं तदेव नटनं तस्य आ समन्तात् केलिः तया वाचालितायाः भूषणेषु शब्दायमानायाः । तस्य प्रहृत-कन्दुकस्य पातोत्पातौ पतनोत्पतने एव तानम् आरोहावरोहौ । तयोः उन्नते विशेषेण नते च दृशौ यस्याः । अत्र पातोत्पातेत्यस्य उन्नत-विनतेत्यस्य च पर-विरुद्धः कवेः प्रमादः "चराचर-स्थावर-जङ्गमानामि"ति प्रयुक्तवत ईश्वरकृष्णस्येव क्षन्तव्यः । अस्याः प्रतिपदं पदे पदे ताडनेषु कन्दुके प्रहारेषु उत्ताला या लीला विलासः तत्र लालित्यान्मनोहरत्वाद्धेतोः । "उत्तालमुच्छृङ्खलमि"ति[6] "ललितं च मनोहरमि"ति केशव-बलभद्रौ । क्रीडितेन क्रीडनेन छन्दिताः वशीकृताः स्मः । "अभिप्राय-वशौ छन्दावि"त्यमरः[7] ॥८॥

भूयः पुनरधिकं वा । अहहेत्यद्भुते । केत्यपेक्षायामाह तथाहीति ।

आहिताः कृता इति यावत् । भ्रमरकेति । "क्रीडनीये भ्रमरक" इत्यच्युतः । कीलित-लोह-शङ्कु रङ्ग-चित्रितो लिकुचाम्र-कपित्थादि-प्रमाणः काष्ठ-विकारः छटा-व्यापार-भ्रमण-शीलो वटूनां क्रीडनक-विशेषः । भोम्वरा इति महाराष्ट्राः[8] । "बभ्राम भ्रमरकवदि"ति नील-

प्रा० प्र०—हेला विलासः तया आहिताः या भ्रमरकवत् भ्रमि-मण्डल्यः ताभिरुपलक्षितेति बोध्यम् ॥६॥

---

1. V. r. no तथाहि ।
2. V. r. वलद्वलयीकृतेन ;वलाहक-धिक्कृतेन ।
3. V. r. भ्रम
4. V.r. छल-त्रयं
5. Moles. p. 750
6. Cp. KDK., p. 230, v. 143
7. Cp. AK. II, 2, 20, p. 186.
8. Moles. p. 622.

( पुनर्निरूप्य )

स्मर-शरधि-निकाशं[1] कर्ण-पाशं कृशाङ्गी
रय[2]-विगलित-ताली-पत्र-ताडङ्कमेकम्[3] ।
वहति हृदय-चोरं कुङ्कुम-न्यास-गौरं
वलयितमिव नालं लोचनेन्दीवरस्य ॥१०॥

च० त०—कण्ठः । भ्रमरकस्येव भ्रमीणां मण्डलीभिर्मण्डलैः समूहैरुपलक्षिता । "भ्रमि-र्भ्रमणमि"ति "भ्रमि-कणे"ति "मण्डलं त्रिष्वि"ति द्विरूप-श्रीहर्षामराः[4] । नत-भ्रूः । चेलस्य वस्त्रस्य अञ्चलेन प्रान्तेन । "पदर" इनि महाराष्ट्राः[5] । चलश्चञ्चलश्चासौ हारः स एव लता तस्याः प्रकाण्डैः गुच्छ-सरैः । "स्यान् प्रकाण्डो गुच्छ-सर" इनि हेमः[6] । वलात् वलात्-कारात् । वलयीकृतेन बद्धतया मण्डलीकृतेन वेण्याः गुणेन सूत्रेण च साधन-त्रयेण चक्राणां त्रयं चिरं रचयतीवेत्यर्थः । तथा च मण्डलाकार-कन्दुक-क्रीडन-वेगातिशये आधारस्य वपुषः कम्पनेन सहैव कम्पमानैराधेयैश्चेलाञ्चल-हार-प्रकाण्ड-वेणी-गुणैश्चक्र-त्रयमेकदा भ्रमयतीवेति भावः ॥९॥

निरूप्य विभाव्य ।

स्मरेति । कृशाङ्गी । "पद्मिनी तु कृशाङ्गी स्यात्" इति स्मर-दीपिकायाम् । लोचनमेव इन्दीवरं तस्य वलयितं मण्डलीकृतं नालमिव । रयेण क्रीडन-वेगेन विगलितं च्युतं मार्दव-निमित्तं विन्यस्त-ताली-पत्रं यस्मात्ताडङ्कात् तद् रय-विगलित-ताली-पत्रम्, तादृशं ताडङ्कं यस्मिन् सः तम् एकं द्वितीय-भिन्नं हृदय-चोरं मनोहरमिति यावत् । चाक-चक्य-भराय कुङ्कुमस्य न्यासेन गौरम् अरुणम् । "अभेदोऽ-

प्रा० प्र०—शरधिर्निषङ्गः । रयो वेगः । "गौरोऽरुण" इत्यमरः ॥१०॥

1. V.r. शरनिधिकाशं ।　　2. V.r. जव ।　　3. V.r. ताटङ्कमेकम् ।

4. AK, III, 2, 9, "भ्रमो भ्रमौ" 1, 2, 16, p. 17.

5. Moles, p. 488.　　6. Not traced in AC. or ASm.

विदूषकः । भोः, विरदा गेंदुअ-खेलणादो ।

राजा । न केवलं विरता सखी, किं तु[1] करतल-न्यस्त-पाणि-पद्मा सप्रत्यभिज्ञ[2]मिवास्मानवलोकयति[3] च । पश्य—

वक्त्र-श्री-जित-लज्जितेन्दुवदिदं[4] कृत्वा करे कन्दुकं
क्रीडा-कौतुक-मिश्र-भावमनया त्र्यस्रं[5] वहन्त्याननम् ।
भृङ्गाग्राग्रह-कृष्ट[6]-केतक-दल-स्पर्धावतीनां दृशां[7]
दीर्घापाङ्ग-निरीक्षणैक[8]-सुहृदामेषोऽस्मि पात्रीकृतः ॥११॥

च० न०—हण-गौरयोरि"ति समय-पद्धतिः । अतिशय-द्योतनाय स्मरस्य शरधे-र्निषङ्गस्य निकाशं सन्निभं कर्णमिव पाशं "कर्णस्य शष्कुली पाशावि"ति समय-पद्धतेः । वहति बिभर्तीत्यर्थः ॥१०॥

वक्त्रेति । वक्त्रस्य श्रिया शोभया जितः अत एव लज्जितः "हस्तगे"ति वा पाठः । स चासौ इन्दुः चन्द्रस्तद्वद् । इदमिति सामान्ये नपुंसकम् । अत एव "शक्यमरविन्द-सुरभिरि"ति [9]"इदं कविभ्य"[10] इति नाथ-चरण-व्याख्यात-शाकुन्तलोत्तर-राम-चरितयोः । इममिति वा पाठः । क्रीडा-कुतूहलयोः मिश्र-भावः परस्पर-मेलनं यस्मिन । त्रीणि अस्राणि भागा यस्य तत् त्र्यस्रम् । एकांश-न्यूनतया दृश्यमित्यर्थः । लज्जा-वशात् किञ्चित्तिरश्चीनमिति भावः । आननं वहन्त्या अनया । भृङ्गैः भ्रमरैः अग्रे दल-प्रान्ते आग्रहेण अभिनिवेश-भरेण कृष्टानि आकृष्टानि यानि केतक-दलानि केतकी-सम्बन्धि-पत्राणि तेषु स्पर्धावतीनां प्रातिभाट्य-शालिनीनाम् । एतेन प्रान्त-नैल्यं दैर्घ्यं च व्यज्येते । "दीर्घापाङ्गस्तु हरिण" इति हार-कोशः, तेषामेव निरीक्षणस्य विलोकनस्य एक-सुहृदां मुख्य-मित्राणाम् । दृशामिति नैल्य-दैर्घ्य-विस्तार-चाक-चक्य-भाव-प्रकाशनादि-

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भोः, विरता कन्दुक-क्रीडनात्

1. V.r. no किं तु । 2. V.r. प्रत्यभिज्ञानम् । 3. V.r. आलोकयति
4. V. r. जर्जरेन्दुमलिनं । 5. V. r. ताम्रं ।
6. V. r. भृङ्गाग्र-ग्रह-कष्ट ; शृङ्गाग्र-ग्रह । 7. V. r. दृशा ।
8. V. r. तरङ्गणैक । 9. AS, III, p. 225. 10. URC. I. I.

विदूषकः । भो[1] एहि अणुसरम्ह सुंदरिं । भोदु पेम्म-दुट्टोली[2] । पीज्जदु[3] दिट्ठीए पीऊस-गंडूसो[4] । दिज्जदु मअणस्स हत्थावलंबो,[5] पअट्टदु पंचम-हुंकाराहिचारो[6] । भोदु विकट-दुब्भरो[7] परिवारवग्गो[8] । अच्छिज्जदु[9] मअरद्धअ-संधि-विग्गह[10]-चिन्ता-वाउलदाए[11] कंठट्ठिद-जीविदो चारायण-बह्मणो ।

च० त०—दुःख-निमित्ततया पूजायां बहुवचनम् नेत्रयोरिति भावः । तथा च मनोहरा-कृतिषु दृशेति प्रयोगे नैकाक्षत्वम् ; दृशामिति प्रयोगे नाक्षि-बहुत्वमिति भाव-सङ्गः ; "विव-क्षैव नियामिके"ति कोकिलः । "निरङ्कुशाः कवयः" इति वद्वः । एषः अहमिति यावत् । पात्रीकृतोऽस्मि विपर्यीकृत इत्यर्थः । तस्मात्त्वयि नूनमस्याः प्रेम-भरोऽस्तीति भावः । ११॥

गण्डूषम् "गुळणी" इति महाराष्ट्राः[12] । मअणस्सेति चतुर्थ्याः षष्ठीति[13]षष्ठी-निर्देशः, मदनायेत्यर्थः । "मदनस्ये"ति व्याकुर्वतां नाथ-चरणानां सम्बन्धे षष्ठीति भावः । अत एव "कस्य ददाती"ति बाणः । पञ्चमः पञ्चम-स्वरः । "पिकः कूजति पञ्चममि"ति वस्तु-निर्णयः । हुङ्कारः कूजन-रूपो येषां तेषां कोकिलानाम् अभि परितः चारः सञ्चारः । कामोद्रेक-भरेणेति भावः । विकटं दुर्भरं दुर्वहं परिपूर्णं यस्य । "विकटं हास्यमि"ति नन्दी । परिवाराणां सखचादीनां वर्गः समूहः । मकरध्वजस्य सन्धि-विग्रहयोः

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भो एहि अनुसरावः सुन्दरीम् । भवतु प्रेम-साफल्यम् । दुट्टोलि-शब्दो देशीयः । पीयतां दृष्ट्या पीयूष-गण्डूषम् । दीयतां मदनस्य हस्तावलम्बः, प्रवर्ततां पञ्चम-हुङ्काराभिचारः । भवतु विकट-दुर्भरः परिवार-वर्गः । अर्च्यतां मकरध्वज-सन्धि-विग्रह-चिन्ता-व्याकुलतया कण्ठ-स्थित-जीवितश्चारायण-ब्राह्मणः ।

1. V. r. ता । 2. V. r. उविसज्जदु पेम्म-दुट्टोणी । 3. V. r. वुट्टीयदु, दीअदु ।
4. V. r. पीजम-गगडूसो । 5. V. r. हत्थालम्बो ।
6. V. r. हिकारो ; हुंकाराधिकारो । 7. V. r. विरहुकलो, विरहाउलो ।
8. V. r. परिचारिआ-वग्गो । 9. V. r. मुच्चदु, मुच्छदु ।
10. V. r. विग्गहो ; विग्गहं, ; विग्गाहा । 11. V. r. वावडदाए
12. Moles, तुलना p,P. 242 । 13. PP, 6 65.

( परिक्रम्य सोपानावतरणं नाटयतः ) ।

विदूषकः । अदेवं देवउलं, अणक्खरो[1] लेहो, जदो ण दीसदि सा ।

राजा । दृष्टा[2] हरिश्चन्द्र-पुरीव[3] नष्टा[4] च ।

विदूषकः । एहि णिउणं णिरूपह्म[5] । सा कहिं पि अभ्यंतरिदा[6] चिट्ठदि । ( चतुर्दिशमवलोकित-नाटितकेन[7] ) ।

राजा । ( सविषादं भुवमवलोक्य[8] )

च० त०—अविद्यमान-कार्य-संघटन-विद्यमान-कार्य-विघटनयोश्चिन्तायां चिन्तने । कण्ठेति । प्राणपर्यन्त-धृत-कार्य-निर्वहण-समर्थ इति भावः ।

सोपानं चतुष्किकाया इति भावः ।

अनक्खरो इति कालिदासादीनामिव कवेः प्रमादः । "अक्ष्यादिषु छ" इति सूत्रेण अक्ष्यादि-गणे अक्षरस्यापि नाम-ग्रहणात् । अणच्छरो इति पाठः कल्प्यः ।

हरिश्चन्द्र-पुरीव सा कृशाङ्गी दृष्टा नष्टा च । क्षणमक्षिभ्यामनुभूतेति भावः ।

अभ्यन्तरिता अन्तर्हिता । "नटनाभिनये नाटिसकमि"ति नाट्य-पद्धतिः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अदेवं देव-कुलम् अनक्षरो लेखः, यतो न दृश्यते सा ।

**हरिश्चन्द्र-पुरी** निशि दृश्यमानं नेत्र-स्फुरण-शीलं ज्योतिः । "रात्रौ दृश्यं दृशोस्तेजो हरिश्चन्द्र-पुरी मते"त्यमरशेषः ।

[संस्कृतच्छाया—विदूषकः] एहि निपुणं निरूपयावः । सा क्वापि अभ्यन्तरिता तिष्ठति ।

---

1. V. r. खीणाक्खरो ।
2. V. r. दृष्ट्वा ।
3. V. r. पुरी
4. V. r. प्रनष्टा
5. V. r. णिरूवह्म ।
6. V. r. थंभंतरिदा, तंभंतरिदा ।
7. V. r. अवलोकितकेन ।
8. V. r. अवलोक्य च, आलोक्य ।

इयं चरण-कुङ्कुमच्छुरित-कुट्टिमा मेदिनी
निवेदयति कन्दुक[1]-व्यतिकरं कुरङ्गी-दृशः ।
अहो[2] किमिदमद्भुतं न च कृशोदरी दृश्यते
भवत्ववगतं स्मरः सृजति मोह-शम्बरीमिव ॥१२॥

( सन्तोषम्[3] अभिनीय समन्तादवलोक्य च )

शिखा-मणिरितोऽरुणस्तिलकयत्ययं मेदिनी-
मितो गलित[4]गुम्फनाश्चपल-वेणि-वान्ताः स्रजः ।

च० न०—विरोधनाशङ्कते इयमिति । चरणयोः कुङ्कुमं । "जाडवें" इति महाराष्ट्राः[5] । छुरितः विद्योतितः कुट्टिमः निबद्ध-प्रदेशो यस्याः । "कुट्टिमोऽस्त्री निबद्धा भूरि"ति, "स्त्रियां भूः क्षमा-प्रदेशयोः" इत्यमर[6]-धनञ्जयौ[7] । अन्यथा भूर्मेदिनीति च कवि-चातुर्याभाव-प्रयुक्त-पौनरुक्त्यापत्तेः । इयं मेदिनी भूमिः कन्दुकस्य व्यतिकरं क्रीडन-रूपं "सम्बन्धे च व्यतिकर" इति नागार्जुनः । निवेदयति, अत्र सा चिक्रीडेति कथयतीत्यर्थः । अहो आश्चर्ये । अद्भुतं कुतूहलम् । "कुतुके चाद्भुतमि"ति रभसः । च: पाद-पूरणे । अवगतं ज्ञातं मयेति शेषः । मोहो भ्रान्तिः तद्रूपां मायाम् इन्द्रजालम् । "मोहस्तु भ्रान्ति-मूर्छयोरि"ति "शाम्बर्यामिन्द्रजाले च माये"ति कपिल-केदारौ । अत्र विरहस्य स्त्री-मूलकत्वेन स्त्रीणां च तदधीनत्वात् स्मरः सृजतीति निर्देशः ॥१२॥

पुनरनुप्रेक्षते शिखेति । अरुणो माणिक्य-मय इति व्यज्यते । शिखा-मणिः । "राखडी" इति महाराष्ट्राः । इतः अत्र, भुवं तिलकयति आत्मना तिलकवतीं करोतीत्यर्थः । गलितं च्युतं गुम्फनं परस्पर-योजन-सन्दर्भो यासाम् । चञ्चल-वेणिवान्ताः परिभ्रष्टाः,

---

1. V.r. कुन्दुरु
2. V.r. हहा
3. V.r. संतापम् ।
4. V.r. ललित
5. Moles. जाडवीं, p. 313
6. AK. II. I. I.
7. Cp. DNM., 5-6, p. 2.

इतश्छुरितमन्तरा[1] त्रुटित-हार-मुक्ता-फलै-
रितः श्रवण-पाशतस्तलज[2]-पत्रमास्ते च्युतम् ॥१३॥

विदूषकः। सुट्ठु क्खु सण्णिवेस-सिलिट्ठं[3] ताल-वत्तं[4]। (आदाय प्रसार्य च[5]) कधं अक्खराइं[6]? अंहो[7] पिअ-वअस्स, जइ कालक्खरिओसि[8] ता पढ[9]।

च० न०—ध्वनिश्च। "वेणिरेपाकशात्त" (?)इति शङ्कर-कविः। स्रजो मालिकाः, वर्तन्ते इति शेषः। अन्तरा मध्ये त्रुटितश्चासौ हारः तस्य मुक्ता-फलैः। "मध्ये स्यादन्तरन्तरे"ति शालिवाहनः। छुरितं प्रकाशितम्। श्रवण-पाशतः कर्ण-पाशात्। च्युतं तलज-पत्रं ताल-पत्रम् आस्ते अस्ति। तालीमिति त्रिरूपः। इतः-शब्दस्य प्रथम-पादे पूर्वमवर्तनात् पाद-त्रये पूर्व-वर्तनान्नियम-भङ्गो दोषः। इत इति त्रयं पुनरुक्तम् ॥१३॥

सन्निवेशेन वलयाकार-स्थापनेन श्लिष्टं संबद्धमित्यर्थः। "वलयीकृत-ताल-पत्रे चन्द्रिके"ति लौकिको व्यवहारः। एतेन विद्याधरमल्ल-देवस्य त्रिलिङ्गाधिपत्वं

प्रा० प्र०—तलज-पत्रं ताल-पत्रम् ॥१३॥

[संस्कृतच्छाया—विदूषकः] सुष्ठु खलु सन्निवेश-श्लिष्टं ताल-पत्रम्। कथमक्षराणि? अंहो प्रिय-वयस्य, यदि कालाक्षरिकोऽसि तस्मात् पठ। अंहो इत्याश्चर्ये। यदि संभावनायाम्। कालाक्षरिको दृष्ट-मात्र-लेख-वाचक इति यावत्। "स्यात् कालाक्षरिको दृष्ट-मात्र-पत्रादि-वाचकः" इति हलायुधः। अनुपनेताकाङ्क्षीत्येके।

---

1. V.r. अम्बरं।  2. V.r. पाशतश्च तल
3. V. r. सुमरिणवेसमिव ; सुसरिणवेसव्व, सुसरिणवेसं विअ
4. V. r. तालवेंटं ; तालच्छदं ; तालछदं।
5. V. r. no च। 6. V. r, अक्खराइं पि। 7. V. r. no अंहो, अयि।
8. V. r. कालवरिओसि, लिविरणोसि। 9. V. r. पढ एदं।

राजा। (वाचयति—)

विधत्ते मौल्ले खं कनगदिह नाङ्गं तरुणिमा

तथापि प्रागल्भ्यं किमपि चतुरं लोचन-युगे।

(विभाव्य) अये, द्विपदीयं न पुनस्त्रापि[1] चतुष्पदी।

विदूषकः। भोः गंडआ[2] विअ उद्धजाणुओ[3] केच्चिरं चिट्ठिस्सामो[4]। ता एहि मत्त-वारणोवरि[5] उवविसह्म[6] (तथा कुरुतः)।

च० त०—सूचितम्। अत एव प्रथमाङ्क-पूर्तौ नेपथ्ये जय जय त्रिलिङ्गाधिपत इति कविनोक्तम्। "महाराष्ट्रस्तु सौराष्ट्रस्त्रिलिङ्गस्त्वान्ध्र" इति वस्तु-निर्णयः। प्रमार्य दीर्घीकृत्य। अक्खराइमिति प्रमादः। अच्छराइमिति सुशब्दः।

वाचयतीति। अथ प्रथमाङ्क-पठितं शिखरिणी-प्रथम-पादमिदानीं द्वितीय-पाद-सहितमुपक्रमते—विधत्त इति। प्रथम-पादस्यार्थः प्रथमाङ्के निरूपितः। तथापि नेत्र-द्वये चतुरं हाव-भावेङ्गितादि-सूचक-वशीकरण-संमोहन-धुरीण-कोण-विलोकन-चाक-चक्य-विशेषैः समर्थम्। किमपि इदानीमीदृशं नादृशमिति निर्धारयितुमशक्यत्वात् अवाङ्मनस-गोचरम्। प्रागल्भ्यं प्रावीण्यम् उन्नितपतीति शेषः। तथा च तारुण्ये सति इतरावयवापेक्षया लोचन-युगे कोऽपि महिम-विशेषो जयतीति भावः। विभाव्य विमृश्य। द्वयोः पादयोः समाहारः द्विपदी। अत्रापि पत्रक इति शेषः। न पुनश्चतुष्पदी चतुर्णां पदानां समाहारः चतुष्पदी पाद-चतुष्टयम्। "द्विपदी सा चतुष्पदी"ति श्रुतेः। पुनः शब्दालङ्कारे।

प्रा० प्र०—किमप्यनिर्वाच्यमिति भावः।

[संस्कृतच्छाया—विदूषकः] भो गण्डकाविवोर्द्ध्व-जानुकौ कियच्चिरं स्थास्यावः? तस्मादेहि मत्तवारणोपरि उपविशावः। गण्डको रव-मृगः। "उपधान-विशेषे स्यान्निबद्धे मत्त-वारणमि"ति।

---

1. V. r. अद्यापि।
2. V. r. पौगण्डआ।
3. V. r. उद्धजाणुअ।
4. V. r. चिट्ठिस्सामि।
5. V. r. मत्त-वारणीए।
6. V. r. उपविसह्म।

( नेपथ्ये—)

यत्ताली-दल-पाक-पाण्डु वदनं यद्दुर्दिनं नेत्रयो-
र्यत्प्रेङ्खोलित-केलि-पङ्कज-दलं[1] श्वासाः प्रसर्पन्ति च ।
गौरी क्रुध्यतु वर्तते यदि न ते तत् कोऽपि चित्ते युवा
धिग् धिक् त्वां सह[2] पांसु-खेलन-सखी-लोकेऽपि यन्निह्नवः ॥१४॥

च० न०—"गण्डके खड्ग-खड्गिनावि"त्यमरः । वक्षाश्रय-चरम-तनोः खड्ग-मृगस्य ऊर्द्ध्व-जानुकावस्थानं जाति-स्वभावः । मत्त-वारणानि शिलाभिः सुधेष्टकाभिर्वा निर्मिता दीर्घ-वर्तुलाकाराः स्थूल-वेदिका-कोण-चतुष्टय-क्रियमाणात्मान उपधान-विशेषाः । "टेंकायो चेलो उ" इति महाराष्ट्राः । वारणोवरीति कवेः प्रमादः "अ मुकुटादिष्वि"ति अनु-शासनेन मुकुटादि-गणे उपरि-शब्दस्य पठिततया अवरीति वक्तव्यस्य साधीयस्त्वात् । तस्मान्मत्त-वारणावरीति वक्तव्यम् । अत एव "धरावरिमि"ति महाराष्ट्राः ।

अथ सखी-जनः सङ्कोच-भरेण विरहानुरागमाच्छादयन्तीं मृगाङ्कावलीं परिभाषते नेपथ्य इति । यच्छब्द-त्रयस्य यस्मादित्यर्थः । वदनं मुखम् । ताली-दलस्य ताल-पत्रस्य पाकः पक्वता तद्वत् पाण्डुरम् । नेत्रयोः दुर्दिनं लक्षणया जलधारा इत्यर्थः । प्रेङ्खोलितानि तरलितानि हस्त-धृत-लीलार्थ-पङ्कजस्य दलानि यस्यां क्रियायां तद् यथा तथा श्वासाश्च प्रसर्पन्ति दीर्घा भवन्ति । तत् तस्मात् । कोऽपि युवा तरुणः । ते तव चित्ते हृदि । न वर्तते यदि चेद् गौरी क्रुध्यतु । गौर्याः क्रोधे सौभाग्यादीनां व्यत्यासः स्यादिति भावः । अत एव "गौरी रुष्टा चेत् सौभाग्यं नैष्यती"ति महाराष्ट्राणाम् आभाणको वर्तते । त्वां धिग् धिगिति वीप्सायां द्विरुक्तिः । यद् यस्मात् कारणात् । त्वयेति शेषः । त्वया सह पांसु-खेलनं यस्य स चासौ सखीनां लोको जनः तस्मिन्नपि निह्नवः क्रियत इति शेषः । "अपलापस्तु निह्नव" इत्यमरः ॥१४॥

1. V. r. दलाः । 2. V. r. खलु ।

विदूषकः। (चमत्कृत्य) भोः सिहाबंधं मे[1] करेहि, अमाणुसी वाणी सुणीअदि

राजा। भित्त्यन्तरितः[2] कश्चिदभिवक्ते।

विदूषकः। तदो[3] वक्खाणेहि[4] मे।

राजा। काचित् क्वचिदनुरक्ता लज्जावती च वयस्यया[5] भिन्न-रहस्या क्रियते।

नेपथ्ये। (सवाक्-स्तम्भम्) सहीओ! किं एत्थ अलिअं संभावेध ?

राजा। वयस्य! श्रुतम्।

विदूषकः। ही ही भोः, एदे[6] क्खु पंडिदा अलिअ-विअप्पेहिं फलुद्धा[7] विअ मक्कला[8] मूलमलहंता पल्लवग्गाहिणो[9] होन्ति,

च० त०—चमत्कृत्य। "चमत्कृत" इति महाराष्ट्राः। भयेनेति भावः।

सवाक्स्तम्भं लज्जया अस्फुटं यथा तथा।

विकल्पैः शङ्काभिः। पल्लवेति। तल-स्पर्शिनो न भवन्ति, उपरिप्लव-मतय इति भावः।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] भोः शिखा-बन्धं मे कुरु, अमानुषी वाणी श्रूयते।

[ ,, ,, ] तस्माद् व्याख्याहि मे।

[ संस्कृतच्छाया—नेपथ्ये ] सख्यः, किमत्र अलीकं सम्भावयथ ?

[ संस्कृतच्छाया—विदूषकः ] ही हीति हासानुकारः। भोः एते खलु पण्डिता अलीक-विकल्पैः फललुब्धा इव मर्कटा मूलमलभमानाः पल्लव-ग्राहिणो भवन्ति,

---

1. V. r. no मे।　2. V. r. भीत्यन्तरितः।　3. V. r. भो।

4. V. r. चक्खाणेहि।　5. V. r. वयस्य; लज्जावती च यस्य भिन्नरहस्या।

6. V.r. एदं।　7. V.r. फलचुक्का, फलछुआ।

8. V.r. मक्कडा।　9. V.r. भाहिणो।

मुक्खा[1] उण फणस-वण-पालआ विअ मूलमण्णेसंता[2] फलं पावइ, ता सुणोदु[3], अहं[4] ज्जेव्व वक्खाणइस्सं । ण क्खु[5] एदं सामण्ण[6]-जण-वअणं, किं तु[7] तुमं ज्जेव्व उवालम्भीअसि[8] । ण क्खु[9] मिअलंछणमुज्झीअ अण्णेण[10] ससि-कंत-पुत्तलिआ बद्ध-णिज्झ-रा[11] पज्झरइ[12] ।

राजा । तदिदं तर्के,[13] अनाकरे[14] पद्मराग-रत्नम् ।

(पुनर्नेपथ्ये)

च० त०—तदिदं व्याख्यातृत्वमिति भावः ।

"चतुरः स्यान्नागरिक" इति धरणिः । न तु मर्कट-हस्त इति भावः ।[15]

प्रा० प्र०—मूर्खः पुनः पनस-वन-पालक इव मूलमन्विष्यन् फलं प्राप्नोति । तस्माच्छृणोतु, अहमेव व्याख्यास्यामि । न खल्वेतत् सामान्य-जन-वचनं किन्तु त्वमेवोपालभ्यसे । न खलु मृग-लाञ्छनम् उज्झित्वाऽन्येन शशि-कान्त-पुत्तिका बद्ध-निर्झरा प्रहृष्यति । पुत्तलिआ इति पज्झरइ इति च शब्दो देशीयः ।

प्रा० प्र०—[ संस्कृतच्छाया—नेपथ्ये ]

---

1. V.r. उक्खा । 2. V.r. मगुसरन्ता ।
3. V.r. सुण, सुणु । 4. V.r. अव्वुदं । 5. V.r. हु ।
6. V.r. सामण । 7. V.r. no किंतु । 8. V.r. भणीयसि ।
9. V.r. हु । 10. V.r. no अरणेण । 11. V.r. बद्धणिज्झरा ; बद्धबिंदु-णिअरा ।
12. V.r. अङ्कुरदि, प्पसरदि ; पाझरदि ।
13. V.r. तर्कय । 14. V.r. अनाकरेऽपि ।
15. The text of this cannot be traced.

कहं दे तक्खण[1]प्फुडिद[2]सिप्पि-संपुड-मुक्क[3]मोतिअच्छाआ ।
थक्कं तु सुमुहि अणंजणाणं[4] णअणाणं बाह-कणा ॥१५॥

सिक्खिसिहि[5]कहं क्खु [6]पसरन्त-पारद-रसदिद्ध[7]-कंचणच्छाअं ।
तणुकदलीए परिपंडुरत्तणं डिंमहरिणच्छि ॥१६॥

कहं णु तुए णज्जंति[8] केलि-पंकेरुहग्ग-क्खलणेण ।
णीसासा[9] ठिअ-हार-लट्ठि-संठाण-परिमाणा[10] ॥१७॥

निबिड-कण्टकिद-कंचुअत्तणं[11] प्फुरइ पुणो देह-दोब्बल्लम् ।
वदणं पुण[12] हरिणंक-बिंब-दीणं कहं णु होइ ॥१८॥

च० त०—अथ सचिन्ता विचक्षणा मृगाङ्कावलीं प्रतिवदति नेपथ्य इति । मौक्तिकस्येव छाया कान्तिः । प्रसरदिति । पीतत्वं सहज-सिद्धं पाण्डुरत्वं विरहानुराग-प्रयुक्तमित्यूह्यम् । स्थितेति हृदय-स्थितश्वासावित्यर्थः । संस्थानमाकारस्तद्वत्परिमाणं येषाम् । दीर्घा इति भावः । देहस्य दौर्बल्यं कृशत्वं स्फुरति । पुनःशब्दः किं चार्थः । निविडं च तत् कण्टकितं "रोम-हर्षे च कण्टक" इत्यमरः, तदेव कञ्चुकः कवचं यस्य देहस्य इत्यर्थात् सिद्धं तस्य भावः कण्टकित-कञ्चुकत्वं स्फुरतीत्यनुपङ्गः, भासतइत्यर्थः ।

प्रा० प्र०—कथन्ते तत्क्षण-स्फुटित-शुक्ति-संपुट-मुक्त मौक्तिकच्छाया ।
दूरीक्रियतां सुमुखि अनंजनयोर्नयनयोर्वाष्प-कणा ॥
शिक्षयसि कथं खलु प्रसरत्-पारद-रस-सिक्त-काञ्चनच्छायम् ।
तनु-कदल्याः परिपाण्डुरत्वं डिंभ-हरिणाक्षि ॥
कथन्नु त्वया ज्ञायन्ते केलि-पङ्केरुहाग्र-स्खलनेन ।
निश्वासाः स्थित-हार-यष्टि-संस्थान-परिमाणाः ॥
निविड-कण्टकित-कञ्चुकत्वं स्फुरति पुनर्देह-दौर्बल्यम् ।
वदनं पुनर्हरिणाङ्क-बिम्ब-दीनं कथं नु भवति ॥

1. V.r. तक्खण । 2. V.r. फालिद । 3. V.r. सम्पुडम्मुक ।
4. V.r. तुहधोअंजणा ; उधाअंजणा ; उधो अंजणाणं अणाणं ; तुह धोअंजणाणं ।
5. V.r. सिक्खिहिसि । 6. V.r. पुसिड । 7. V.r. पारदरसदित्त ।
8. V.r. जणिज्जन्ति 9. V.r. णीसासा । 10. V.r.परिमाणा ।
11. V.r. कंचुअं । 12. V.r. पुणोवि ।

[1]अइ तुह विज्जाहरमल्ल-देअ-दंसणेण प्फुडमागदा भंगीओ।
ण विणा चंदं सेहालिआए विअसंति कुसुमाइम् ॥१९॥

विदूषकः। सिविणअ-दिट्ठा [2]हिंदोलिया-चित्त-संचारिदा सालभंजिअत्तणेण परिणदा गेंदुअ-खेलिणी कव्व-बंध-वअणा[3] सच्चा[4] ज्जेव एसा तुए अक्खित्ता तुह चित्तं अक्खिवदि।

च० त०—एतेन महाशक्तिरनुरागातिशयश्च व्यज्यते। पुनरलङ्कारे। दीनमिति। उत्साह-दशायामस्या वक्त्रोपमां चन्द्रो नार्हतीति भावः। भङ्ग्यो रीतयः, एता इति शेषः। नेति। चन्द्र-साम्यं राज्ञः, शेफालिका-साम्यं मृगाङ्कावल्याः कुसुम-साम्यं भङ्गीनामिति बोध्यम्।

"खेलोऽस्या अस्तीति खेलिनी। "द्वयोः खेले"ति विश्वः। "खे खेल-गामी"ति कालिदासः। काव्यानां गीति-रूप-कवनानां बन्धो गुम्फनम्। "यद् गीतयश्चलदि"ति प्रथमाङ्केऽभिहितम्। आक्षिप्ता आकृष्टा। आक्षिपति आकर्षतीति यावत्।

प्रा० प्र०—अयि तव विद्याधरमल्ल-देव-दर्शनेन स्फुटमागता भङ्ग्यः।
न विना चन्द्रं शेफालिकाया विकसन्ति कुसुमानि ॥
"शेफालिका तु सुवहे"त्यमरः ॥
अत्र सिप्पि ढक्किज्ज सिक्किवि इति त्रयः शब्दा देशीयाः।
णज्जंतीत्यत्र "ज्ञो णज्ज-णप्पावि"ति णज्जादेशः। भङ्ग्यो विलासाः ॥

[संस्कृतच्छाया-विदूषकः]—स्वप्न-दृष्टा हिन्दोलिका-चित्त-सञ्चारिता सालभञ्जिकात्वेन परिणता कन्दुक-खेलिनी काव्य-बन्ध-वचना सत्यैव एषा त्वया आक्षिप्ता तव चित्तम् आक्षिपति। काव्य-बन्धो वचनानि यस्याः सा तथोक्ता।

---

1. V.r. इह।
2. V.r. दोलणं दोमिणी ; दोलं दोलिणी।
3. V.r. कव्वबंधरअणा।
4. V.r. सा

नेपथ्ये । सहि मिअंकावलि ! संपदं[1] मए णिसग्गत्थए[2] दूदीए होदव्वं ।

राजा । सैवेयमस्मन्मनसि मन्मथेनेदानीमुत्कीर्यते[3] मृगाङ्कावलीति पञ्चाक्षरी ।

नेपथ्ये । रइदा मए तुहावत्था-णिवेदणत्थं[4] महाराअस्स[5]-पुरदो पढणिज्जा दुवे सिलोआ, ते पियसहीए सुणीअदु[6] ।

( संस्कृतमाश्रित्य )

चन्द्रं चन्दन-कर्दमेन लिखितं यन्मार्ष्टि[7] दृष्टाधरा

कामः पुष्पशरः[8] किलेति सुमनोवर्गं लुनीते च यत् ।

च० त०—निसर्गे अनुपाधि-रूपे च भावे तिष्ठतीति निसर्गस्था । उत्कीर्यते विलिख्यत इव । पञ्चानाम् अक्षराणां समाहारः पञ्चाक्षरी । अत्र पञ्चाक्षरीति कथनं कवेरचातुर्यमिति महान्तः, तस्याः महा-मन्त्र एव रूढत्वात् । पञ्चवर्णीति वा पाठः ।

संस्कृमाश्रित्येति । सहज-प्राकृतोक्तेर्विचक्षणायाः संस्कृते कथनं महती प्रशस्तिरित्यूह्यम् । चन्द्रमिति । यच्छब्द-त्रयस्य यस्मादित्यर्थः । "मार्ष्टि मार्जयती"ति माठरः । लुनीते छिनत्ति । तस्य शराभावायेति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया—नेपथ्ये ] सखि मृगाङ्कावलि, मया साम्प्रतं निसर्गस्थया दूत्या भवितव्यम् ।

रचितौ मया तवावस्था-निवेदनार्थं महाराजस्य पुरतः पठनीयौ द्वौ श्लोकौ, तौ प्रिय-सखी शृणोतु । निसर्गेति स्व-भाव-स्थितेत्यर्थः ।

एतान्यक्षराणि सर्वाणि नेपथ्याद् बहिः स्थिताया विचक्षणाया ज्ञेयानि ।

---

1. V.r. ता संपदं ।
2. V.r. णिसिट्ठत्थाए ; निसिट्ठाए ।
3. V.r. उत्तीर्यते ।
4. V.r. तुहावत्थाए वेदणत्थं ।
5. V.r. महाराअस्स ।
6. V.r. हुणीअदु ; सुणीअ
7. V.r. संमार्ष्टि
8. V.r. पंचशरः ।

वन्ध्यं[1] निन्दति यच्च मन्मथमसौ[2] भङ्क्त्वाऽग्र-हस्ताङ्गुली-
स्तत् कामं[3] सुभग! त्वया वर-तनुर्वातूलता लम्भिता[4] ॥२०॥

अपि च—

तापोऽम्भःप्रसृतिम्पचः प्रचयवान् बाष्पः प्रणालाञ्चितः[5]
श्वासाः प्रेङ्खित-हार-यष्टि-लतिकाः[6] पाण्डिम्नि मग्नं वपुः।

च० त०—अयं चः पाद-पूरणे। भङ्क्त्वा भङ्गं प्रापय्य। तत्तस्मात्। "वातूलः क्षणिक" इत्यनिलावर्तः। तस्य भावो वातूलता अस्थैर्यमिति यावत्। "पुंसि वातूलो वात्या-चक्र-भ्रमानिल" इति नन्दी। "वहटलि" इति महाराष्ट्राः[7]। भवदुत्कण्ठया क्वचिदपि स्थिर-चित्ता नेयमिति भावः ॥२०॥

ताप इति। "यः प्रसृत्यम्बुपाकी स तापोऽम्भःप्रसृतिम्पच" इति केदारः। तथा च तापः प्रसृतौ स्थितस्याम्भसः पचनं करोतीत्यर्थः। "प्रसृति[1]पाशा" इति महाराष्ट्राः। प्रचयवान् अभिवृद्धः। बाष्पः नेत्राम्बु। प्रणालैः अञ्चितः सङ्गतः। "द्वयोः प्रणाली पयसः पदव्यामि"त्यमरः[3]। "पहले" इति महाराष्ट्राः[4]। श्वासाः निश्वासाः। हार एव यष्टिः। अल्पाः लताः लतिकाः एकदेशा इत्यर्थः, प्रकृते मौक्तिक-सरा विवक्ष्यन्ते। तथा च प्रेङ्खितास्तरलिताः हार-यष्टेर्लतिकाः यैः। वपुः पाण्डिम्नि

प्रा० प्र०—लम्भिता प्रापिता ॥२०॥

---

1. V.r. वंधं।
2. V.r. मान्मथमसौ।
3. V.r. कालं।
4. V.r. लंभितः ?।
5. V.r. प्रणाल्यञ्चितः ; प्रणालोचितः।
6. V.r. कम्पित-दीप-वर्ति-कलिकाः।
7. Moles, वहाटल वा वहादूल, p. 738.

किं वाऽन्यत्[1] कथयामि रात्रिमखिलां त्वन्मार्ग-[2]वातायने
हस्तच्छत्र-निवारितेन्दु[3]-महसस्तस्याः स्थितिर्वर्तते ॥२१॥

विदूषकः । अहं उण जाणे अणुप्पविसीअ चलिदुम् । अंहो, इह[4]सुण्ण[5] चउक्किआसण्णा[6] केवि वह्मरक्खसा[7] जप्पंति[8] । भूअ-पिसाचावासट्ठाना संझा[9] सण्णिहिदा वट्टदि, ता एहि गच्छह्म[10] ।

च० त०—धावल्ये मग्नम् । किं चेति कु-पाठः, किं वेति सु-पाठः । अखिलां सर्वां रात्रिं त्वन्मार्गस्य वातायने अभिमुख-गवाक्षे । हस्त एव छत्रं तेन निवारितं दर्शन-दूरीकृतम् इन्दोर्महः चन्द्रिका यया । तस्याः मृगाङ्कावल्याः । स्थितिः अवस्थानम् वर्तते विद्यते । यथाकथंचिद्-द्यापि जीवतीति भावः । अत्र वर्णनातिशयेन नायादीनामतिपौष्कल्यं व्यज्यते ॥२१॥

मया दूत्या भवितव्यमिति विचक्षणा-वाक्यात् अयमेव समय इत्याह अहमिति । अनुप्रविश्य तस्याः स्थानमवगाह्य । चलितुं परतो गन्तुमित्यर्थः । अथ "मध्ये मध्ये श्रुतिर्वाचां दर्शनस्थेऽप्यदर्शनमि"ति रूपकादर्शोक्तेरनुप्रवेशे बाधकमाह—अंहो इति, भीतिवाचको निपातः । शून्येति । "स्थानं शून्यं भूत-वर्गा विशन्ती"ति शिल्प-शास्त्रे मयेनाभिधानात् । आवासाय निवासाय स्थानमास्पदं यस्याम् ; "सन्ध्या सर्व-भूत-निवेशिनी"ति वाद्योक्तेः ।

प्रा० प्र०—रात्रिमिति "कालाध्वनोरत्यन्त-संयोगे" इति द्वितीया ॥२१॥

[ संस्कृतच्छाया—विदूषकः ] अहं पुनर्जाने अनुप्रविश्य चलितुम् । अंहो, इह शून्य-चतुष्किकासन्नाः केऽपि ब्रह्म-राक्षसा जल्पन्ति । भूत-पिशाचावासस्थाना सन्ध्या सन्निहिता वर्तते । तस्मादेहि गच्छावः । भूत-पिशाचानाम् आवास-स्थानं यस्याः सा तथोक्ता । संझेत्यत्र "द्व्यक्षर" इति झत्वम् ।

1. V.r. चान्यत् 2. V.r. तन्मार्ग । 3. V.r. निरुद्ध-चन्द्र ।
4. V.r अह्मे छलिदुम् इह । 5. V.r. सुवरण ।
6. V.r. संकन्ता चउक्कियासंकन्ता । 7. V.r. दुव्वह्मरक्खसा ; दुव्वह्म ।
8. V.r. जंप्पंति । 9. V.r. भूदपिसाअसंझा असंझा, भूअपिसाअ असंझा ।
10. V.r. ता ओदरह्म

राजा । यथाह भवान्[1] । (इति उभाववतरणं[2] नाटयतः) ।

नेपथ्ये । सुखाय सायन्तनी[3] सन्ध्या भवतु देवस्य । सम्प्रति हि

निर्यद्[4]-वासर-जीव-पिण्ड-करणं[5] बिभ्रत् कवोष्णान् करान्[6]

माञ्जिष्ठं रवि-बिम्बमम्बर-तलादस्ताचलं चुम्बति ।

किञ्च स्तोक-तमः-कलाप-कलना-श्यामायमानं मनाग्

धूम-श्याम-पुराण-चित्र-रचना-रूपं जगज्जायते ॥२२॥

च० त०—अवतरणं चतुष्किका-सोपान-परंपराया इति भावः ।

प्रथमाङ्के वर्णित-मध्याह्नौ वैतालिकौ संप्रति द्वाभ्यां सायं वर्णयतः—नेपथ्य इति । सायं भवा[1] सायन्तनी । "दिनान्ते तु सायं सन्ध्या पितृ-प्रसूः" इत्यमरः[7] । हि प्रसिद्धौ ।

निर्यदिति । निर्यन् गच्छं-श्चासौ वासरस्तस्य जीव एव पिण्डो गोलः । तस्य करणं रात्रि-गमनादनन्तरम् असकृदनुजीवनाद्धेतोः साधकतमम् "अहः सूर्यात् प्रवर्तते" इति काल-निर्णयात् । "जीवोऽसु-धारणमि"ति, "करणं साधकतमं" इति चामरः । कवोष्णान् मन्दोष्णान् । करान् किरणान् । बिभ्रत् दधानं "कवोष्णं मन्दोष्णमि"ति[8] "माञ्जिष्ठं पीतमि"त्यमराच्युतौ । चुम्बति प्राप्नोति इति यावत् । स्तोकः अल्पश्चासौ तमसां तिमिराणां कलापः समूहः तस्य कलनया उदयेन श्यामायमानं जगद् भुवनं कर्तृ । मनाक् ईषत् धूमैः श्यामं यत् पुरातन-चित्रं तस्य रचना आकृतिः तस्या इव रूपं स्थितिर्यस्य तत् । "रचना त्वाकृतावपी"ति "स्थिति-लावण्ययो रूपमि"ति त्रिकाण्डि-संसारावर्तौ । जायते भवति । तथा च दिवसापगमेन रवावस्तं गच्छति तमःश्यामं जगत् पुरातन-चित्रमिव दृश्यादृश्यं भवतीति भावः ॥२२॥

प्रा० प्र०—पिण्डेत्यश्लीलं यद्यपि तथापि "मृतस्य शिशोरि"ति भवभूति-प्रयोगवत्, "ताराऽस्थि-सञ्चयं कर्तुमिवेन्दुरसृजत् करानि"ति क्षेमेन्द्र-प्रयोगवच्च समाधेयम् ॥२२॥

---

1. V. r. यथा भवान् ; यथा भवानाह । 2. V. r. इत्यवतरणं ।
3. V. r. सायन्तन । 4. V. r. निर्याद्वासर ।
5. V. r. करुणं ; करुणां । 6. V. r. कवोष्णैः करैः ।
7. AK. I. 3. 3, p. 20. 8. AK. I. 2. 36, p. 20.

अपि च,

सैरन्ध्री-कर-कृष्ट-कङ्कण-तरत्तार¹-ध्वनिः सञ्चरद्-
दूती-सूत्रित-सन्धि-विग्रह-विधिः सोल्लास-लीला-चयः² ।
वार-स्त्री-गण-सज्ज्यमान³-शयनः सन्नद्ध-पुष्पायुधः
श्रीखण्ड-द्रव-धौत-सौध-तलको⁴ रम्यः क्षणो वर्तते ॥२३॥

च० न०—अपि चेति । श्रीखण्डानां चन्दनानां द्रवेण रसेन धौतानि विमलीकृतानि सौधानां तलकानि प्रदेशा यस्मिन् । "हर्म्यादौ सौधमस्त्रियामि"ति जयः । सैरन्ध्रीभिः करेषु हस्तेषु कृष्टाः मञ्जुल-रत्नालङ्कारादि-शिल्प-विशेष-करणाय सत्वरमाकृष्टाः । नवोढा जना लक्ष्यन्ते ; तेषां यानि कङ्कणानि कर-भूषणानि तेभ्यः तरन्तः प्रसर्पन्तः तार-ध्वनयो यस्मिन् । "सैरन्ध्री शिल्प-कारिके"ति हेमचन्द्रः[5] । "कङ्कणी" इति महाराष्ट्राः[6] । "तारोऽत्युच्चैरि"त्यमरः[7] । "रसदि"ति भ्रान्तः पाठः, ध्वनेः सत्वेन पौनरुक्त्यापत्तेः ; सञ्चरन्त्यः हिण्डमानाश्च ता दूत्यः ताभिः सूत्रिताः अङ्कुरिताः । सन्धीनाम् अविद्यमान-शृङ्गार-कार्य-संघटनानां विग्रहाणां विद्यमान-कार्य-विघटनानां विधयः प्रकारा यस्मिन् । सोल्लासाः लीलानां क्रीडानां चयाः समूहाः यस्मिन् । "मुख-विकासे स्यादुल्लास" इति धनञ्जयः । "सोत्साह" इति वा पाठः । वार-स्त्रीणां वेश्यानां सप्त-वार-कल्पस्त्रीणामिति चार्थः । गणैः सज्ज्यमानानि परिष्क्रियमाणानि शयनानि शय्या यस्मिन् । "चये"ति कु-पाठः पुनरुक्तेः ; सन्नद्धः कदा कदेति सन्नाह-युक्तः पुष्पायुधो मन्मथो यस्मिन् । अत एव रम्यः । "रमणीये च रन्तुं च योग्ये रम्यं त्रिष्वि"ति ध्वनि-मञ्जरी । क्षणः "निर्व्यापार-स्थितौ काल-विशेषोत्सवयोः क्षण" इत्यमरः । वर्तते अस्तीत्यर्थः । तथा च मदन-शरार्दितस्य राज्ञो विरहानले घृताहुतिरिवेयमुक्तिरित्यूह्यम् ॥२३॥

1. V. r. सरद्धोर ।    2. V. r. चरः ।
3. V. r. जन-सज्जमान ।    4. V. r. तलिमो ; तलिनो ।
5. AS. III. 656. p. 99 "सैरन्ध्री पर-वेश्मस्थ-शिल्पकृत्-स्व-वश-स्त्रियामि"ति ।
6. Moles, कंकणी-+कंकणोदार.........कंगणी+कंगणादार p. 124.
7. 1, 6, 2, p. 31.

राजा। सन्ध्यामुपासितुं देवी-भवनमेव गच्छावः[1]।

( इति निष्क्रान्तौ )।

इति विद्ध-शालभञ्जिकायां द्वितीयोऽङ्कः ॥

च० त०—सन्ध्यामुपासितुमिति निमित्तम्। आमृगाङ्कावली-लाभं देव्या भवनं प्रत्येव, गच्छाव इति भावः। एतेन सद्यश्चतुर्वर्गे तृतीय-पुरुषार्थ-गौरवेण देव्यां दाक्षिण्यम् आगामि-मृगाङ्कावल्यां तु प्रेमाभिनिवेशो व्यज्यत इति दिक्।

इति महाराज...सुन्दरी-कमलीये सहज-समाख्याने व्याख्याने द्वितीयोऽङ्कः ॥

# अथ तृतीयोऽङ्कः

( ततः प्रविशति चेटी )

चेटी। (परिक्रम्य) को विअ कालो वट्टदि पिअ-सहीए विअक्खणाए दिट्ठाए। उक्कंठा-भरेण अस्सु-सीअर-कब्बुरिअं[1] विअ करि-दंत-मुसलं फुट[2]-भूइट्ठं वट्टदि मे हिअअं। ता कहिं णु[3] क्खु तां[4] दक्खिस्सं[5] ? (पुरोऽवलोक्य) कधं एसा पिय-सही किं पि चिंतअंती[6] इदो एव्व[7] आअच्छदि।

च० त०—अथेह तृतीयाङ्के सोत्कण्ठं राजानं प्रवेशयिष्यन्, अलीक-विवाह-कुपितेन विदूषकेण देव्याः पुरो जीव-दासच्छलान्मेखलां विडम्बयिष्यन्, मृगाङ्कावल्या राज्ञः परस्परं समागम-दर्शन-संलापादिकं कारयिष्यन्, विचक्षणा-सुलक्षणा-प्रश्नोत्तरानुवाद-पद्धत्या गत-वर्तमानागामि-कथोपक्षेपमुट्टङ्कयिष्यन् कविः प्रवेशं प्रक्रमते तत इति। द्वितीयाङ्क-पूरणावसरे देवी-भवनं प्रति राज्ञो गमनानन्तरमित्यर्थः। चेटी सुलक्षणा। क इव महानित्यर्थः। काल इति ध्वनिः। अस्र-शीकरैः वप्र-तटाघातादि-जनित-रुधिराम्बु-कणैः कर्म्बुरितं रञ्जितम्। भूयिष्ठं भूयः। स्फुटम् अतिप्रकाशम् इति यावत्। अत एव "अभिरूप-भूयिष्ठे"ति[8] नाथ-चरण व्याख्यात-शाकुन्तले। तथा च

छा० प्र०—[संस्कृतच्छाया—चेटी]—क इव कालो वर्तते प्रिय-सख्या विचक्षणाया दृष्टायाः। उत्कण्ठा-भरेण अस्र-शीकर-कर्बुरितमिव करि-दन्त-मुसलं स्फुट-भूयिष्ठं वर्तते मे हृदयम्। तस्मात् क नु खलु तां द्रक्ष्यामि? कथमेषा प्रिय-सखी किमपि चिन्तयन्ती इत एवागच्छति?

---

1. V. r. असिसिरकरकरंबिज्जमाणं ; अमसिरमिअर : अ ससिअरकरंबिज्जमाणं।
2. V. r. फुट्टण, कुट्टण। 3. V. r. no खु। 4. V. r. तं।
5. V. r. पेक्खिस्सं ; प्पेक्खिस्सं। 6. V. r. कहं...पिअ-सही किं वि मंतअंती।
7. V. r. no इदो एव्व। 8. AŚ. I, Prastāvanā, P. 8.

( ततः प्रविशति यथानिर्दिष्टा द्वितीया चेटी )।

द्वि-चेटी। (स्वगतम्) अहो मंतिणो[1] पहु-कज्जे णिरदिसआ भत्ती।

प्रथमा। कधं महा-भाअधेअ-जण[2]-कज्ज-सिद्धी[3] विअ चिंतिदोवणदा पिअ-सही। (स्वगतम्)[4] ता पच्छा[5] भविअ णअणाइं से पीडिस्सं[6]। (तथा करोति)।

द्वितीया। पिअ-सहीए सुलक्खणाए कर-प्फंसो[7]

(प्रकाशम्) सहि सुलक्खणे! जाणिदासि[8] ता मुंच[9] णअणाइं।

सुलक्षणा। ( नयने परित्यज्य स-प्रणय-कोपम् ) हला

च० त०—विचक्षणा-विषये मम हृदयं करि-दन्तवत् परिशुद्धं, साम्प्रतमुत्कण्ठा-भरेण अनुरक्तं चेति भावः। अत एवोपमायाम् अस्रेति विशेषणमुक्तम्।

द्वितीया चेटी विचक्षणा।

प्रथमा सुलक्षणा।

प्रा० प्र०—[संस्कृतच्छाया—द्वि-चेटी]—अहो मन्त्रिणः प्रभु-कार्ये निरतिशया भक्तिः।

[संस्कृतच्छाया—प्रथमा]—कथं महा-भागधेय-जन-कार्य-सिद्धिरिव चिन्तितोपनता प्रिय-सखी? तत् पश्चाद्भूत्वा नयने अस्याः पीडयिष्यामि।

[संस्कृतच्छाया—द्वितीया]—प्रिय-सख्याः सुलक्षणायाः कर-स्पर्शः।

सखि सुलक्षणे, ज्ञातासि, तन्मुञ्च नयने।

---

1. V. r. महामंतिणो  2. V. r. भाअ-जण।  3. V. r. कज्ज-संधी।
4. V. r. no स्वगतम्।  5. V. r. पच्चा  6. V. r. पिहाइस्सं।
7. V. r. विअ कर-प्फरिसो।  8. V. r. तुमं।
9. V. r. मुंचेहि।

विअक्खणे ! एत्तहमेत्ते वि सलिल-सित्त-सण-गुण-गंठि-गाढे[1] वि सिणेहे कधं उब्भिण्ण-सिहा खंजरीट-पक्खिणी[2] विअ अदंसणा वट्टसि[3] ? ता एसा दे कुप्पामि[4] ।

विचक्षणा । (स-प्रश्रयम्) । सहि[5] सुलक्खणे ! मा कुप्प, महा-मंति-भागुराअण-णिओओ[6] एत्थ अवरज्झदि[7] ण उण[8] अहं ।

सुलक्षणा । (सोपहासम्) को तुह्माहिंतो[9] अण्णो छगुणअ-विसये वट्टइ[10] ?

च० न०—एत्तहेति निपातः । "एत्तहमेत्त-स्थणो"ति शालिवाहनः । शण-गुण-ग्रन्थेः सलिल-सिक्तत्व-कथनम् अतिदृढिमापादकम् । "सणं वाचे दोरे" इति च महाराष्ट्राः । "गाढं दृढ"मिति पद-मञ्जरी ।

प्रा० प्र०—[ संस्कृतच्छाया—सुलक्षणा ]—हला विचक्षणे, एतावन्मात्रेऽपि सलिल-सिक्त-शण-गुण-ग्रन्थि-गाढेऽपि स्नेहे कथ-मुद्भिन्न-शिखा खञ्जरीट-पक्षिणीव अदर्शना वर्तसे । शिखा अवतंसः । "शिखोद्भेदे तु जाते सत्यदृश्या खञ्जना भवेदि"ति प्रपञ्चस्थितौ नाथोक्तेः । तस्मादेषा ते कुप्यामि ।

[संस्कृतच्छाया विच ]—सखि सुलक्षणे, मा कुप्य । महा-मन्त्रि-भागुरायण-नियोगोऽत्र अपराध्यति न पुनरहम् ।

[ संस्कृतच्छाया—सुल ]—को युष्मत्तोऽन्यः षाड्गुण्य-विषये विद्यते ।

---

1. V. r. गंठि-गाढे ।
2. V. r. खंजरीटी, खंजरीडी ।
3. V. r. चिट्ठसि
4. V. r. कुविस्सं ।
5. V. r. पिअ-सहि ।
6. V. r. णिओओ एव्व ।
7. V. r. अवरक्खदि ।
8. V. r. no उण ।
9. V. r. तुह्मादो ।
10. V. r. छगुणणअ-णिउणो ।

विच । अह्मारिस-जण-जोग्गं छगुण्ण-दंसणत्तणं[1] क्खु एदं ।

मुल । महिला-छग्गुण्णएण जइ महिला-अणस्स अदंसणं ता अह्मारिसीओ कीति[2] दीसंति ।

विच । कह कीदिसं दे[3] महिला-छग्गुण्णअं ?

मुल । तुमं भण दाव उण[4] अहं भणिस्सं, प्पठमं[5] सह-आर-मंजरी[6] उब्भिज्जइ[7] पच्छा तु[8] कलकंठी मुद्दं सिढिलेदि[9] ।

च० त०—षण्णां गुणानां समाहारः षाड्गुण्यं तदेव दर्शनं शास्त्रमवलोकनं वा यस्य स षाड्गुण्य-दर्शनः मन्त्री तस्य भावः । षाड्गुण्य-दर्शनमिति वा पाठः । "सन्धिर्ना विग्रहो यानम् आसनं द्वैधमाश्रयः । षड्गुणा" इति न्याय-चन्द्रिकायाम् ।

महिलेति । मन्त्रिणं विहाय महिलायां स्त्रियां विद्यमानं षाड्गुण्यं कीदृश-मित्यर्थः ।

'पुनः पश्चादर्थे चे"ति वामनः । उद्भिद्यते उदयति । कलकण्ठी कोकिला । मुद्रां मौनम् ।

प्रा० प्र०—[ संस्कृतच्छाया—विच ]—अस्मादृश-जन-योग्यं महिला-षाड्गुण्य-दर्शनत्वं खल्वेतत् ।

[ संस्कृतच्छाया—मुल ]—महिला-षाड्गुण्येन यदि महिला-जनस्यादर्शनं तद् अस्मादृश्यः किमिति दृश्यन्ते ।

[ संस्कृतच्छाया—विच ]—कथय कीदृशन्ते महिला-षाड्गुण्यम् ?

[संस्कृतच्छाया—मुल]—त्वं भण तावत् पुनरहं भणिष्यामि । पुनः पश्चादिति यावत् । प्रथमं सहकार-मञ्जरी उद्भिद्यते पश्चात्तु कल-कण्ठी मुद्रां शिथिलयति ।

---

1. V. r. महिला-छगुण्णअं ।
2. V. r. महिला-छग्गुण्ण-एण वि जइ अदंसणत्तणं ता अस्मारिसो अक्खिहिं वि ।
3. V. r. अध दे कीदिसं ।
4. V. r. पुणो ।
5. V. r. पठमं ; पुडमं ।
6. V. r. मंजरीओ ।
7. V. r. उव्भिज्जंदि ; उव्भिज्जंति ।
8. V. r. तु चुंविणी, तच्चुंविणी
9. V. r. कलअंठी कंठ-मुद्दं सिढिलेदि ।

विच। ता सुणु, अहमेक्कदा[1] भअवदा मागुराअणेण सबहुमाणं भणिदा, विअक्खणे[2]! अह्माणं राअ-रहस्से तुए साहज्जं[3] कादव्वंत्ति[4]।

मुल। अहो दे मदि-विहवो जं दाणिं संणिहा वि एवं संभावीअसि[5]। अहवा[6] का वण्णणा बकुलावली[7] गंध-सारुग्गारेत्ति[8]। तदो तदो।

विच। [9]विणओवणदाए मए तधेत्ति[10] पडिवण्णं। कधिदं अ मे तेण, जधा, एसो जो मिअंकवम्मा[11] सा[12] मिअं-कावली[13],

च० त०—गन्ध-सारस्य उद्गारः उद्गिरणं यस्याः। तुल्यो गुण इति भावः।

प्रतिपन्नं ज्ञानम् अवश्य-कर्तव्यत्वेन इति शेषः। पडिण्णादमिति पाठे प्रतिज्ञातम् अङ्गीकृतमिति यावत्।

प्रा० प्र०—[संस्कृतच्छाया—मुल]—तस्मात् शृणु। अहमेकदा भगवता मागुरायणेन सबहुमानं भणिता, विचक्षणे, अस्माकं राज-रहस्ये त्वया साहाय्यं कर्तव्यमिति।

[ संस्कृतच्छाया—मुल ]—अहो ते मति-विभवः यदिदानीं संनिधाऽप्येवं संभाव्यसे। अथवा का वर्णना बकुलावली गन्ध-सारोद्गारेति। "गन्धः स्याद्गुण आमोदे लेशे सम्बन्ध-गर्वयोः। स एव द्रव्य-वचनो बहुत्वे पुंसि च स्मृतः"-इत्यस्य निघण्टुः। ततस्ततः।

[संस्कृतच्छाया विच]—विनीतोपनतया मया तथेति प्रतिपन्नम्। कथितं च मे तेन, यथा, एष यो

1. V. r. अहमेक्कदा : अहं एक्कदा।
2. V. r. विअक्खणे preceded by जधा and followed by तुए।
3. V. r. साहाज्जं ; कादज्जं।
4. V. r. कादव्वंत्ति
5. V. r. जेण महामंती वि एदं संभावेदि।
6. V. r. no अहवा।
7. V. r. बउलावलीए।
8. V. r. सुरहि-गंधुग्गारेत्ति : गंधो रेहंत्ति।
9. V. r. preceded by तदो।
10. V. r. तधत्ति।
11. V. r. मिअंकवम्मो।
12. V. r. no सा।
13. V. r. मिअंकावलीत्ति। मुल। तदो तदो? विच। तदो।

तं परिणीअ सिरि-उवराएण चक्कवत्तिणा[1] होदव्वं, ता तुए ननु कदाचिद्[2] भवण-भित्ति-संचारे[3] वास-घरे एसा[4] वासिदव्वा,[5] जेण देवस्स[6] सिविणआवगमो[7] होदि, कज्जंतराइं[8] दे हरदासो कधइस्सदि, एदस्सिं महाराअ-कज्ज-रहस्से तुमं तीए[9] पिअ-सही राअ-कज्ज-सज्जत्ति[10] अब्भत्थीअसि[11]। ण हु सोवाण-वंतिमंतरेण वलही[12]-समारोहो। तदो मए हरदास-कधिद-कज्जाणुसारेण सा सुवीसद्धं[13] भणिदा, अइ[14] सहि मिअंकावलि ! इह वास-घरे मकरद्धओ ओदरदि, तं अ[15]

च० त०—यथेति कथन-प्रकारः। भवन-भित्तिषु सञ्चारो यस्मिन तस्मिन वास-गृहे।

प्रा० प्र०—मृगाङ्क-वर्मा सा मृगाङ्कावली, तां परिणीय श्रीयुवराजेन चक्रवर्तिना भवितव्यं, तस्मात्त्वया ननु कदाचिद्भवन-भित्ति-सञ्चारे वास-गृहे एषा वासयितव्या, येन देवस्य स्वप्नावगमो भवति, कार्यान्तराणि ते हरदासः कथयिष्यति। एतस्मिन् महाराज-कार्य-रहस्ये त्वं तस्याः प्रिय-सखी राज-कार्य-सज्जेति अभ्यर्थ्यसे। न खलु सोपान-पंक्तिमन्तरेण वलभि-समारोहः। "हर्म्य-भेदे च वलभिरि"ति यादवः। ततो मया हरदास-कथित-कार्यानुसारेण सा सुविस्रब्धं भणिता, अयि सखि मृगाङ्कावलि! इह वास-गृहे मकरध्वजोऽवतरति, तच्च

1. V. r. महाराअ-सिरि-विज्जाहरमल्लदेवेण-महिअल-चक्कवत्तिणा।
2. V. r. तस्स कदावि। 3. V. r. भवण-भित्ति-गब्भ-संचारे; संचार-वास-हरे।
4. V. r. वास-हरे।
5. V. r. दंसिदव्वा।
6. V. r. No देवस्स।
7. V. r. आगमो।
8. V. r. कज्जंतर-ट्ठाणाइं।
9. V. r. तुए तीएवि।
10. V. r. साहज्जं विअ।
11. V. r. अब्भत्थिअसि; अत्थीअसि।
12. V. r. वडहीए।
13. V. r. सविस्संभं; सविस्सत्थं।
14. V. r. जधा।
15. V. r. वास-हरे मअरद्धओ उदेइ। तं च।

तहिं दट्ठूण कंठ-ट्ठिद[1]-हार-कुसुम[2]-दामेण सो[3] तुए अच्चि-दव्वो,[4] जेण दे तादिसो[5] भत्ता होदित्ति[6], तए[7] वि तह अब्भुवअदं[8] किदं अ। पुणो[9] हिंदोलए दंसिदा, केलि-कैलास-वास-घर-[10] फलिह-भित्तिसु अत्तणो चित्तं लेहाविदा, [11]फलिह-भित्तिए परदो दंसिदा, तदणुवादिणी सालभंजिआ णिम्माविदा, रअण-वदीए चउक्किआए गड्डुएण खेलाविदा, खंभ-गब्भ-संचारे[11] तं तं भणाविदा भमाविदा अ[12]।

च० त०—अन्तरेण विना। हार एव कुसुम-दाम मालिकेत्यर्थः। अभ्युपगतम् अङ्गीकृतम्। केलि-कैलासमिति स्थान-विशेषः।

प्रा० प्र०—तस्मिन् दृष्ट्वा कण्ठ-स्थित-हार-कुसुम-दाम्ना स त्वयाऽर्चितव्यः, येन ते तादृशो भर्ता भवतीति। तयापि तथाऽभ्युपगतं कृतञ्च। पुनर्दोलायां दर्शिता, केलि-कैलास-वास-गृह-स्फटिक-भित्तिषु आत्मनश्चित्रं लेखिता, स्फटिक-भित्तेः परतो दर्शिता, तदनुवादिनी शालभञ्जिका निर्मापिता, रत्नवत्याञ्चतुष्किकायां कन्दुकेन खेलिता। स्तम्भ-गर्भ-सञ्चारे तत्तद् भाणिता भ्रामिता च। खम्भेत्यत्र "स्तम्भे ख"[13] इति खत्वम्। खेलाविदा भणाविदा भमाविदा त्रयः शब्दा देशीयाः। "झणविली भ्रमावली" इति महाराष्ट्राः॥

---

1. V. r. कंठाहिं कट्ठिदेण; कंठाहिकट्ठिदेण; कण्ठाहिं कट्ठीरेण; कंठाहिंतो कट्ठिदेण।
2. V. r. उसुम।
3. V. r. no सो।
4. V. r. अञ्जिदव्वो।
5. V. r. एदादिसो।
6. V. r. होदि।
7. V. r, तिए; मीए।
8. V. r. अवभुवगदं।
9. V. r. उण।
10. V. r. केलि-कैलास-भवने सुट्ठिद।
11. V. r. त्थंभ-गव्भ-संचारेण।
12. V. r. भणाविदा पठाविदा अ।
13. PPr., 3. 14, p. 65

सुल । अध तं विविह[1]-विलासेहिं पेक्खंतेण[2] महाराएण किं पडिवण्णं ।

विच । जं केलि-अरिणी[3]-चाडु-कमे चलिदो[4] अरण्ण-करी पडिवज्जस्सदि[5] । तदो तरुण-पोफुल्ल-गुच्छ-विच्छुरिद-दविड-सामलङ्गी-गंड-विसदासु[6] सुद्ध[7]-जामिणीसु असमंजसं विप्प-लवदि,[8] तं जधा[9] । ( संस्कृतमाश्रित्य )

च० त०—प्रतिपन्नं प्राप्तम् ।

करिण्याः चाटु-क्रमे शृङ्गार-मार्गे । प्रतिपत्स्यत इति, करि-कर-क्रीडायित-मित्यर्थः । तथा चायं मनसा करि-कर-लीलां प्राप्तो न तु क्रिययेति भावः । श्यामलाङ्ग्यो मनोहर-स्त्रियः । अत एव घरट्ट-भ्रमण-केलि-गीतेषु "सावलीबायी" इति महाराष्ट्राङ्गना गायन्ति । तासां द्रविड-श्यामलाङ्गीनां गण्डाः श्वेताधराः । अधरेषु श्वेतता ताम्बूलाभाव-प्रसक्त्येति भावः । "गण्डः श्वेताधरे स्त्रीणां गण्डो विस्फोट-गल्लयोरि"ति केदारः । गण्डेति ध्वनिश्च । तद्वद् विशदासु श्वेतासु । विप्रलपति विरोधोक्तिं ब्रूते ।

समिति । प्राकृते श्लोक-रचना-सामर्थ्ये सत्यपि संस्कृतमाश्रित्येति कथनं सर्वेषामप्र-यास-परिज्ञानायेत्यूह्यम् ।

प्रा० प्र०—[ संस्कृतच्छाया—सुल ] अथ तां विविध-विलासैः पश्यता महाराजेन किं प्रतिपन्नम् ?

[ संस्कृतच्छाया—विच ] यत् केलि-करिणी-चाटु-क्रमे चलितोऽरण्य-करी प्रतिपत्स्यते । "रण्ण-करी"ति पाठे "लोपोऽरण्ये"[10] इति अकारस्य लोपः ।

ततस्तरुण-प्रोत्फुल्ल-गुच्छ-विच्छुरित-द्रविड-श्यामलाङ्गी-गण्ड-विशदासु शुद्ध-यामिनीषु अस-मञ्जसं विप्रलपति । तद् यथा—

1. V. r. विविहेहिं । 2. V. r. पेक्खिअ तेण । 3. V. r. no केलि ;केलि-करिणी ।
4. V. r. कम्मच्छलिदो । 5. V. r. पडिवज्जेदि, पडिवज्जदि ।
6. V. r. पोफल्लिछल्लि-छोल्लिद-दविड-सामलो दंत-पंक्ति-विसदासु ।
7. V. r. सुद्ध-ससि ; पुण्ण-ससि । 8. V. r. विप्पलअदि ।
9. V. r. यधा तं ; तधा तं ।
10. PPr. 1. 4, p. 6 ; अ compulsorily elided : Vararuci ; but see PrāV., 1. 66, p. 12, omission of अ optional.

श्यामां[1] श्यामलिमानमानयत भोः सान्द्रैर्मषी-कूर्चकै-
र्मन्त्रं तन्त्रमुत[2] प्रयुज्य हरत श्वेतोत्पलानां रुचम्[3] ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिला-पट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्र-मुद्राङ्किताः ॥१॥

मुल । तीए उण का अवत्था वट्टदि ।

च० त०—तामेवोदाहरति श्यामामिति । भोः इति पार्श्व-चरान प्रति सम्बोधनम् । सान्द्रैः निविडैः । मषी कज्जल-रसः । "शायी" इति महाराष्ट्राः । तेन युक्तैः कूर्चकैः । "दर्भ-स्तूपे कूर्चकमस्त्रियामि"ति नाम-निधानम् । नैल्य-सम्पादनाय कूर्चकैरित्युक्तम् । "अभेदो नील-हरितोरि"ति समय-पद्धतिः । अत एव "रामं दूर्वा-दल-श्याममि"ति "इन्दीवर-श्याममि"ति च प्राप्तम् । श्यामां रात्रिम् । "रात्रि-शारिकयोः श्यामे"ति हारावली[4] । श्यामलिमानं नैल्यम् । आनयत प्रापयत । मषीभिर्नैल्यापादने सति ज्योत्स्नापगमाद् विरह-श्वेतस्य तदाननस्य सर्वतः प्रकाशो भवेदिति भावः । मन्त्रम् उत अथवा तन्त्रं तदुचितमुच्चाटनादि-व्यापारं प्रयुज्य प्रयुक्तं कृत्वा श्वेतोत्पलानां कुमुदानां रुचं कान्तिं हरत निवारयत । कुमुदानां द्युति-निरासे तन्मुखं निरुपमं विहरेदिति भावः । शिला-रूपे पट्टके मरीच्यादि-पेषण-साधने । "पाटा" इति महाराष्ट्राः, चन्द्रं च कृत्वा स्थापयित्वा क्षणात् कणशः तिलशः चूर्णयत । चन्द्र-नाशे तद्वदनं निःसपत्नं विलसेदिति भावः । नन्वेवं कृते किं फलमत आह येनेति । येन कारणेन अहं दश दिशः तद्वक्त्रस्य मुद्राभिः प्रत्यर्पणैः । "वसे" इति महाराष्ट्राः । अङ्किताश्चिह्निताः द्रष्टुं क्षमे प्रगल्भो भवामीत्यर्थः । एवं कथनं "दश दिशः खलु तद्दृग-कल्पयल्लिपिकरी नल-रूपक-चित्रिता"[5] इति श्रीहर्ष-कवन-च्छायानुसारीति बोध्यम् ॥१॥

ताए तस्या मृगाङ्कावल्या इत्यर्थः ।

प्रा० प्र०—श्यामा रात्रिः, प्रकृते ज्योत्स्नी गृह्यते ॥१॥

[ संस्कृतच्छाया—मुल ] तस्याः पुनः काऽवस्था वर्तते ?

---

1. V. r. ज्योत्स्नीं ।　　2. V. r. तन्त्रमथ　　3. V. r. स्मितम् ।

4. Not traced in the HV. of Pur.　　5. Naiṣadha, 4. 15, p. 235.

विच । ( संस्कृतमेवाऽऽश्रित्य )

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीम्
आरात्[1] त्रस्यति चित्र-केलि-सदसो वेशं विषं मन्यते ।
आस्ते केवलमब्जिनी-किसलय-प्रस्तार-शय्या-तले
संकल्पोपनमत्तदाकृति-रसायत्तेन चित्तेन सा ॥२॥

संपदं[2] तुमं कहेहि[3] कीदिसं ते[4] महिला-छग्गुण्णं[5] ।

सुल । सुणु जादिसं । एक्कदाहं[6] महाराएण [7]सप्पसादं संदिट्ठा[8], जधा, ण तुए णिभिण्ण-रहस्सा देवी कादव्वत्ति ।

च० त०—विरह-वशादखिलमपि सुखं वस्तु दुःखायत इत्याह—सौधादिति । सौधाद् राज-सदनात् उद्विजते उद्वेगं प्राप्नोति । ऐन्दवीं चान्द्रीम् । चित्रं यत् केलि-सदः क्रीडार्थ-सभा तस्याः । पंचमी । आराद्दूरात् । त्रस्यति बिभेति । वेषं नेपथ्यम् । अब्जिन्याः किसलयानां प्रस्तारो विस्तारः स एव शय्या-तलं तस्मिन् । "समौ प्रस्तार-विस्तारावि"ति रभसः । संकल्पेन मानस-कर्मणा ध्यानेनेति यावत् । उपनमंती आविर्भवंती चासौ तस्य राज्ञः आकृतिः रूपं तस्मिन् रसः प्रीतिः तस्याः आयत्तेन चेतसा उपलक्षिता सा केवलं यथा तथा "व्यापारान्तर-शून्यत्वे तन्मयत्वे च केवलमि"ति समासः । आस्ते अस्ति । तथा च तदेक-निष्ठ-मनाः क्षणं युगमिवातिवाहयतीति भावः ॥२॥

निर्भिन्नं प्रकाशितम् अस्मदीयं रहस्यं यस्यै ।

प्रा० प्र०—आयत्तम् अधीनम् ॥२॥

[ संस्कृतच्छाया—विच ] साम्प्रतं त्वं कथय कीदृशन्ते महिला-षाड्गुण्यम् ।

[ संस्कृतच्छाया—सुल ] श्रृणु यादृशम् । एकदा अहं महाराजेन सप्रसादं सन्दिष्टा, यथा न त्वया निर्भिन्न-रहस्या देवी कर्तव्येति ।

---

1. V. r. द्वारात्
2. V. r. संपदं उण ।
3. V. r. कधेहि ।
4. V. r. तं ।
5. V. r. महिलाच्छगुणणअं ।
6. V. r. एकदाहं ।
7. V. r. करुणे सप्प...... ।
8. V. r. आदिट्ठा ।

विच । किं विअ तं ।

सुल । जहा[1], अलिअ-विवाह-विलक्खो चाराअणो देवी-धात्तेइअं पदारिदुमिच्छदि[2] । ता दिणावसाण-समए तरुण-वणराइ[3]-नीरंध-अंधआरे[4] केसर-तरु-सिहरं[5] आरुहिअ पमदुज्जाण[6]-मज्झगामिणी मेहला तए[7] साणुणासिअं भणिदव्वा, जहा[8], अयि मेहले ! इह वेसाह-पुण्णिमा-पओसे[9] एव[10] तुए मरिदव्वंति[11] । भणिदा[12] अ सा ।

विच । तदो तदो ?

सुल । तदो तीए सज्झस-वस-वेविदाए[13] कहं वि[14] तत्त

च० त०—"धात्रेयिका च धात्रेयी धात्री"ति त्रिकाण्डी ।

प्रा० प्र०—[ **संस्कृतच्छाया—विच** ] किमिव तत् ?

[ **संस्कृतच्छाया—सुल** ] यथा, अलीक-विवाह-विलक्षश्चारायणो देवी-धात्रेयीं प्रतारयितुमिच्छति । विलक्षो विस्मयान्वितः । प्रतारयितुं वञ्चयितुम् ।

तद् दिनावसान-समये तरुण-वनराजि-नीरन्ध्रान्धकारे केसर-तरु-शिखरमारुह्य प्रमदोद्यान-मध्यगामिनी मेखला त्वया सानुनासिकं भणितव्या । भीति-भरायेति भावः ।

यथा, अयि मेखले ! इह वैशाख-पूर्णिमा-प्रदोष एव त्वया मर्तव्यमिति । भणिता च सा ।

[ **संस्कृतच्छाया—विच** ]—ततस्ततः ।

[ **संस्कृतच्छाया—सुल** ]—ततस्तया साध्वस-वश-वेपितया कथमिव तत्र

---

1. V. r. तं जधा ; जधा ।　2. V. r. विप्पदारिदुमिच्छदि ।
3. V. r. no वणराइ ।　4. V. r. केसर-तरुहिं नीरंधे अंधआरे ।
5. V, r. सिहरं ।　6. V. r. प्पमदुज्जाण ।
7. V. r. तुए ।　8. V. r. जधा ।　9. V. r. प्पदोसे ।
10. V. r. ज्जेव ; ज्जेव्व ।　11. V. r. मरिदव्वंत्ति ।　12. V. r. भणिदा ।
13. V. r. वेविदंगीए ; वेविद-सव्वंगीए ।
14. V. r. कधं कधं ; कधं वि ; कहंपि ; कधं कधं ।

हविअ[1] कद[2]-णिबिडञ्जलि-संपुडाए भणिदं, भअवदि असरीरिणि दिव्वे वाणि ! मं अणुकंपंतीए जधा मरणं तुए जाणिदं जीविदं वि मे जाण[3] ।

विच । तदो तदो ?

सुल । तत्थ मए एव्वं भणिदं,[4] जइ गंधव्व-वेअ-विअक्खणं बह्मणं गुरुणा अच्चणा[5]-सक्कारेण अहिणंदिअ पाएसु पडंती[6] जंघन्तर-मग्ग-दुवारेण[7] सञ्चरसि[8] तदो दे जीवितावलंबो त्ति[9] ।

च० त०—द्वारेण संचरस इति । "संचारे संचरत्येतत् तृतीया-युक्तमात्मन" इति केदारः । "पथा साधुना स्वैरं संचरत" इति डमरुके नाथ-चरणाः । साधारण्यम् ।

प्रा० प्र०—भूत्वा कृत-निविडाञ्जलि-सम्पुटया भणितं, भगवति अशरीरिणि दिव्ये वाणि, मामनुकम्पयन्त्या यथा मरणं त्वया ज्ञातम्, जीवितमपि मे जानीहि ।

[ संस्कृतच्छाया—विच ]—ततस्ततः ।

[ संस्कृतच्छाया—सुल ]—तत्र मयैवं भणितम्, यदि गन्धर्व-वेद-विचक्षणं ब्राह्मणं गुरुणाऽर्चना-सत्कारेणाभिनन्द्य पादयोः पतन्ती जङ्घान्तर-मार्ग-द्वारेण सञ्चरसे ततस्ते जीवितावलम्ब इति ।

---

1. V. r. तदोहिमुहं भविअ ; ताद अहिमुहं ।
2. V. r. किद ।
3. V. r. जीवणोपाअं मे उवदिसेहि ।
4. V. r. तदो तधे जेव्व कधिदं ; तह एव्व कहिदं ।
5. V. r. no अच्चणा ।
6. V. r. विलंती ; वलंती ।
7. V. r. जंघंतर-मज्झ-दुआरेण ।
8. V. r. संचरिस्ससि ।
9. V. r. जीवित-लंभोत्ति ; जीविद-लंभोत्ति ।

विच। अहो दे[1] विअक्खणत्तणं! जदो मुणिणो वि एव्वं सुमरंति, पादाहिंतो[2] बह्मणा पवित्तअंति सव्वं[3]। ( विभाव्य ) अहो[4] कवड-णाडअ-कइत्तणं बह्मणस्स! तदो[5]?

सुल। तदो तं सुणिअ मेहलाए अस्सु-झल-ज्झलाइं[6] उव्वमन्तीए[7] महाराअ[8]-पुरदो एव्व भणिता देवी[9]। देवेण वि[10] देवी-मण्णुं अवहरंतेण[11] चारायण-चरिदं अ णिव्वहंतेण भणिदं,

च० त०—अश्रूणां नेत्रांबूनां झलज्झलानि "निर्झरे तु झलज्झलमि"ति नागार्जुनः। "सबाष्प-झलज्झलैरि"त्यमरुके भगवत्पादाः। देव्याः मन्युं कोपम्। एतेन "देवी व्यपास्य शयनं धृत-मान-तंतुरि"त्यादि कोप-निमित्त-प्रथमांक-शुद्ध-विष्कंभानंतर-निरूपितं

प्रा० प्र०—[ **संस्कृतच्छाया—विच** ]—अहो ते वैचक्षण्यम्। यतो मुनयोऽप्येवं स्मरन्ति पादेभ्यो ब्राह्मणाः पवित्रयन्ति सर्वम्।

**सुमरन्ती**त्यत्र "स्मृते भर-सुमरावि"ति[12] सुमरादेशः। "भ्यसो हिन्तो सुन्तो"[13] इति सूत्रेण **पादाहिन्तो** इति रूपं सिध्यति। अहो कपट-नाटक-कवित्वं ब्राह्मणस्य। अनेन व्याजेन स्व-चातुर्यं कविना प्रकाशितमिति बोध्यम्। ततः।

[ **संस्कृतच्छाया—सुल** ]—ततस्तच्छ्रुत्वा मेखलयाऽश्रु-झलज्झलान्युद्वमन्त्या महाराज-पुरत एव भणिता देवी। देवेनापि देवी-मन्युमपहरता चारायण-चरितं च निर्वहता भणितं,

---

1. V. r. no दे। 2. V. r. पादाहिं। 3. V. r. बह्मणस्स पवित्तणंत्ति; बह्मणस्य पवित्तत्तणं। सुलक्खणा।
4. V. r. अहो से किं पि।
5. V. r. विचक्खणा; तदो तदो।
6. V. r. गलज्जलाइं।
7. V. r. णअणाइं उणउत्तमुपफुसन्तीए; पुणरुत्तमुप्पुसन्तीए; णअणाइं दट्ठूण उप्पसन्तीए।
8. V. r. मम।
9. V. r. महाराअ-समीव-वट्टिणीए देवीए तह ज्जेव विण्णत्तं।
10. V. r. देवेणावि।
11. V. r. मणोणुरूवं वाहरन्तेण; मण्णु-भअं हरंतेण।
12. PPr., 8. 18, v. r. स्मरतेर्भर।
13. PPr., 5. 7.

जह[1], सुंदरि ! मा सण्णा[2] होहि, [3]गंधव्व-वेअ-विअ-क्खणो बह्मणो साहीणो एव्व[4]। ता किंत्ति[5] अस्सु-कण-करंबिअ-बिंबाहरा[6] वट्टसि त्ति संट्ठाविदा देवी। देवीए वि[7] अज्ज सा पुण्णिमेत्ति[8] पूआ-सक्कारं सज्जीकादुं पेसिदह्मि।

विच। ता एहि जधाणिदिट्ठमणुचिट्ठिस्सह्म[9]। ( इति निष्क्रान्ते )।

( इति प्रवेशकः )

(ततः प्रविशति विरहोत्कण्ठितो[10] राजा स्नान-शुचि[11]र्विदूषकश्च)

च० त०—संविधानमनुसन्धेयम्। सन्ना श्लथा। अश्रु-कणैः करंबितो रंजितः परिशोभितो विंबाधरो यस्याः। एतेन सर्वावयव-लावण्य-सूचकौ स्तनयोरौन्नत्य-काठिन्य-भरौ व्यज्येते। अत एव "स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेध-निपात-चूर्णिताः"[12] इति भर्तृमीढः। संस्थापितेति ध्वनिः। प्रवेशकः॥

तत इति। राज-प्रवेश-सूचनं प्रमादः। विरहाद्धेतोः उत्कण्ठितः संजातोत्कण्ठः।

प्रा० प्र०—यथा, सुन्दरि, मा सन्ना भव, गन्धर्व-वेद-विचक्षणो ब्राह्मणः स्वाधीन एव। तस्मात् किमिति अश्रु-कण-करम्बित-बिम्बाधरा वर्तस इति संस्थापिता देवी। आश्वासितेत्याशयः। देव्यापि अद्य सा पूर्णिमेति पूजा-सत्कारं सज्जीकर्तुं प्रेषितास्मि। सत्कारमित्यत्र संभारेति वा पाठः।

[ संस्कृतच्छाया—विच ] तस्मादेहि यथानिर्दिष्टम् अनुष्ठास्यावः।

प्रवेशक इति—"प्रवेशकस्तु विज्ञेयो नीच-पात्र-प्रयोजितः।
यत्र चानागतार्थानां वीजावापो विधीयते॥"

इति रूपकादर्शे लक्षणात्।

---

1. V. r. जधा। 2. V. r. विसण्णा। 3. V. r. जदो गंधव्व।
4. V. r. ज्जेव, ज्जेव्व। 5. V. r. तत् किं त्ति।
6. V. r. लोअणा। 7. V. r. देवीए अ अहं।
8. V. r. पुण्णिमत्ति भणिअ।
9. V. r. जधाणिवेदिदमणुचिट्ठह्म; णिद्दिट्ठमणुचिट्ठह्म।
10. V. r. निविडोत्कण्ठो निषण्णो। 11. V. r. स्नातः शुचिः।
12. KumS., 5. 24, p. 148.

राजा। ( अनुध्यान-नाटितकेन )।

क्रम-सरलित-कण्ठ-प्रक्रमोल्लासितोर-
स्तरलित-वलि रेखा[1]-सूत्र[2]-सर्वाङ्गमस्याः[3]।
स्थितमतिचिरमुच्चै रग्र-पादाङ्गुलीभिः
कर-कलित-सखीकं मां दिदृक्षोः स्मरामि ॥३॥

च० न०—अनुध्यानस्य तस्या अनुसरण-पूर्वक-ध्यानस्य। नाटितकेन। "नटनाभिनयो नाटितकमि"ति लिङ्गानुशासनम्।

अथ द्वितीयाङ्क-प्रवेशकानन्तरं सखी-करतल-न्यस्त-पाणि-पल्लवा सप्रत्यभिज्ञमिवास्मान् अवलोकयतीति संविधानमनुस्मरन्नाह क्रमेति। मां दिदृक्षोः द्रष्टुमिच्छोः अस्याः। क्रमेण पर्यायेण सरलितः दिदृक्षा-वशाद् दीर्घीकृतश्चासौ कण्ठः तस्य प्रक्रमः दीर्घीकरणे उपक्रमः तेन उल्लासितं संजात-पुरस्करण-रूपोल्लासं यदुरः वक्षः तेन सह तरलिताः प्रेङ्खोलिताः वलयो यस्मिन् स्थितं तत्। रेखेति। तत्तदङ्ग-मर्यादा-विभजन-नियामक-सीमा-रूपा रेखा तद्विधायकं यत् प्रमाण-सूत्रं तद्वदन्यूनाधिकानि सम-विभक्तानि सर्वाण्यङ्गानि अवयवाः यस्मिन्। सर्वाङ्गमिति ध्वनिः। करे कर-तले कलिता स्व-पाणि-पल्लव-न्यासाय संस्पृष्टा सखी यस्मिन् तत् कर-कलित-सखीकम्। एतेन प्रभावातिशयः सूचितः। उच्चैः महतीभिः दीर्घाभिरिति यावत्। "महत्युच्चैरि"त्यमरः। अग्राणि च ताः पादयोरङ्गुल्यः ताभिः स्थिति-क्रियायां साधनैरङ्गुल्यग्रैरिति यावत्। अत एव कर-कलित-सखीकमित्यवलंबनापादकं हेतु-गर्भ-विशेषणं युज्यते। स्थितं स्थितिमित्यर्थः। तथा च "गतं तिरश्चीनमि"ति "अलसः श्रुतेने"ति माघ-केशवौ। स्मरामि चिन्तयामि। पूर्व-दृष्ट-तदाकार-सौष्ठव-संस्थान-विशेष-स्मरणेनैव संप्रति जीवामीति भावः ॥३॥

प्रा० प्र०—रेखेति रेखा-सूत्रवदन्यूनमनधिकञ्च सर्वाङ्गं यस्मिन्निति बोध्यम्। अस्या मृगाङ्कावल्याः ॥३॥

---

1. V. r. लेखा। 2. V. r. सत्र। 3. V. r. सर्वस्वमस्याः

विदूषकः। मा समाधान[1]-भंगं मे[2] कुण, देवी-पुरदो मेहला जीवइदव्वा[3]। ( स्वगतम् ) अइ दुट्ठ-दासि ! दोसिणि[4] कुद्धो चाराअणो पीडइस्सदि[5]।

राजा। ( तद्वचनमनाकर्ण्य तदेव पुनः[6] पठति )।

विदू। मा पुणो पुणो[7] सुमर[8], संदावदाइणी[9] क्खु एसा[10]।

राजा। किमात्थ, सन्तापकारिणीति ? तथा हि,[11] पञ्चम-काकली-कल[12]-गीतयः कर्णं कलुषयन्ति, सुधास्यन्दिनी चन्द्र-मूर्तिश्चक्षुषी तापयति,[13] चन्दन-रस-निष्यन्दस्तनुं दहति ?

च० त०—समाधानस्य प्रणिधानस्य भङ्गम् अन्य-व्याक्षेपेण विघ्नं मा कुरु।

तदेव श्लोकमित्यादि।

कुपितो मैवं वदेत्याशयेनाह किमिति। सन्तापोऽपि सुखद इति दृष्टान्तमुखेनाह तथा हीति। पंचम-स्वर-युक्त-काकलीत्यर्थः। "तुतोरे" इति महाराष्ट्राः[9]। सुधास्यन्दिनी अमृतवर्षिणी मूर्तिः वपुः। "निष्यन्दो क्षर-वर्षयोरि"ति यादवः।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] मा समाधान-भङ्गं मे कुरु। देवी-पुरतो मेखला जीवयितव्या। अयि दुष्ट-दासि, दोषिणि, क्रुद्धश्चारायणः पीडयिष्यति।

[ संस्कृतच्छाया—विदूषकः ] मा पुनः पुनः स्मर। सन्तापदायिनी खल्वेषा।

---

1. V. r. समाधि। 2. V. r. no मे।
3. V. r. जीवाविदव्वा। 4. V. r. no दोसिणि।
5. V. r. णिवडिस्ससि देऽरण्डः कुरुद्धो चाराअण-वह्मणो; णिपदिस्सदि अ क्कुद्धो चाराअण-वह्मणो; निवडिस्सदि दण्डः चाराअण-वह्मणो।
6. V. r. पुनः omitted; श्लोकमित्यादि पुनः।
7. V. r. पुणो। 8 V. r. तं सुमर।
9. V. r. संदावदाइणी डाइणी। 10. V. r. सा।
11. V. r. तत्तव। 12. V. r. no कल। 13. V. r. चक्षुः सन्तापयति

विदू । भो वक्करं मए किदं,[1] तुमं जेव्व सव्वदो सारं उच्चिणसि । हंसो जेव्व जलेहिं दुद्धमुद्धरेदि । किं उण भणामि, मए अज्झअण-विज्जा विअ तुए[2] विसुमरिदा देवी ।

राजा । आ शैशवात् प्ररूढ-प्रणया[3] देवी कथं विस्मर्यते ? किन्तु—

देव्या निधायोरसि[4] वाम-पादं यत् सुन्दरीभिः[5] प्रसभेन भुक्तम्[6] ।
कृतं मनो रिक्थमहो[7] द्विधा तत्तथा[8] विभज्य स्मर-शासनेन ॥४॥

च० त०—सर्वस्मात् वस्तुत इति शेषः । सारं स्थिरांशं गुणोत्कर्षमिति यावत् । "किन्त्वर्थे किं पुनरि"ति हेमः ।

आ शैशवात् बाल्यादारभ्य प्रकर्षेण रूढो जातः प्रणयः प्रेम यस्यां सा । कथं विस्मर्यते नैव विस्मर्यते मयेति शेषः । तथापि कश्चिद्विशेषोऽस्तीत्याह किन्त्विति ।

सुन्दरीभिः इतराभिः कामिनीभिः । देव्याः उरसि वाम-पादं निधायेति महाराष्ट्रेष्वाभाणकः । प्रसभेन "प्रसभस्तु बलात्कारेऽभिनिवेशे च कौतुके" इति मेदिनी । यन्मनो रिक्थं मानसमेव द्रव्यं भुक्तं ममेति शेषः । सम्भोगायानुभूतमिति भावः । मुख्यतया मनसो ग्रहणम् । "यद्धि मनसा ध्यायति तद्वाचा वदति, तत् कर्मणा करोति" इति श्रुतेः । "रिक्थं द्रव्यमि"ति त्रिकाण्डी । तन्मन एव स्मरस्य शासनेन आज्ञया तथा अन्यूनाधिकम् इतराखण्ड्यं यथा तथा वा विभज्य विभक्तं कृत्वा द्विधा द्वेधा कृतम् । अहो आश्चर्ये । तथा च मम देव्यामेव भूयः प्रेमानुबन्धि एकमेव मनः, तथापि भगवतो मदनस्य शासनेन संप्रति देव्यामर्धमन्यत्र चार्धमिति विभज्य द्विधाकृतमिति भावः ॥४॥

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] भोः, चौर्यं मया कृतम् । वक्कर-शब्दो देशीयः । त्वमेव सर्वस्मात् सारम् उच्चिनोषि । हंस एव जलेभ्यो दुग्धमुद्धरति । किं पुनर्भणामि, मयाऽध्ययन-विद्येव त्वया विस्मृता देवी ।

प्रसभं बलात्कारः । मनोरिक्थं मानस-द्रव्यं भुक्तं मयेति शेषः । स्मर-शासनेन मन्मथाज्ञया ॥४॥

---

1. V. r. कहिदं । 2. V. r. अलसेण विअ विज्जा भत्ति दे ।
3. V. r. प्ररूढ-प्रेमा । 4. V. r. उपरि । 5. V. r. सुन्दरीणां ।
6. V. r. युक्तं । 7. V. r. मथ । 8. V. r. तत्तुल्यं ; तत्तन्व्या ।

विदूषकः। अकह्मा[1] हिंदोल-दोलिदं विअ[2] दे चित्तं गमा-गमाहिं[3] ण विरमदि।

राजा। एवमेतत्। यतः—

नो[4] मालती-दाम विमर्द-योग्यं
न प्रेम नव्यं महतेऽन्तरायम्।
म्लानापि मोच्या न हि केसर-स्रग्
देवी न खण्डय-प्रणया कथञ्चित् ॥५॥

विदूषकः। भोः किं एदेण दक्खिण्ण-वण्णोवण्णासेण[5] ?

च० त०—अस्तु दूरे चिरानुभवाज्जरत्यसौ देवी, नन्वियं नवोढैव प्रेम-पात्रमित्याशंक्याह नो इति। "सुमना मालती-जाति"रित्यमरः। "जायी" इति महाराष्ट्राः। तन्मयं दाम माल्यं विमर्दस्य कर-चरणादि-मर्दनस्य योग्यं नो नेत्यर्थः। "अभावे नहि नो" इत्यमरः। देवी मालती-मालेव मान्यैवेति भावः। कुत इति चेत्, नव्यं नवीनं मृगांकावली-निबन्धन-मिति यावत्, प्रेम देवी-संबन्धिनि पुरातन-प्रेम्णि अन्तरायं विघ्नं न सहते। ननु "भुक्त-पूर्वाम् इव स्रजमि"ति न्यायेन म्लाना भुक्ता च मालिका मोच्यैवेत्यत आह— म्लानापि केसरस्य पुष्पाणि केसराणि तैर्गुंफिता स्रक् माला। "बोल-सरीची माल" इति महाराष्ट्राः। न मोच्या न त्याज्या हि। प्रकृतौ किमित्यपेक्षायामाह, देवी कथंचित् कथमपि केन प्रकारेणापि खण्ड्यः प्रणयो यस्याः तथोक्ता, केसर-स्रगिवेति फलितोऽर्थः। तथा च नवीनेषु प्रेम-दारेषु सत्स्वपि मालती-दामवल्लालनीयाः पूर्व-दाराः केसर-माल्यवन्न परित्याज्याः। स-प्रणयं माननीया एवेति भावः ॥५॥

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] अकस्माद्दोलान्दोलितमिव त्वच्चित्तं गमागमाभ्यां न विरमति।

[संस्कृतच्छाया—विदूषकः] भोः, किम् एतेन दाक्षिण्य-वर्णोपन्यासेन,

1. V. r. ता। 2. V. r. व्व ; व।
3. V. r. गमागमाहिंतो। 4. V. r. न।
5. V. r. दक्खिण्ण-वण्णोवण्णासेण।

पुराण-पत्तमणिप्फालिअ[1] णो पल्लवो[2] समुल्लसदि[3]। ण अ तरुण-गंठिवण्णअ-कंदली-कवलण-लुद्धो गंध-हरिणो मदण-केदारिआए[4] अहिरमदि।

राजा। सखे! निरर्गल-वागसि। यदनाशङ्कनीयं तदाशङ्कसे।

विदूषकः। किं मम परकेरआए[5] चिन्ताए[6]। ता भणीअसि, मा समाधान[7]-भंगं मे कुण, देवीए[8] पुरदो मेहला जीवइदव्वत्ति[9]।

च० त०—पुराण-पत्रं पुरातन-पर्णम् अविदार्य अनिपात्य। णिप्फालिअ इति देशीयः शब्दः। तस्मात् तव मृगांकावल्यामेव प्रेम न तु देव्यामित्यभिप्रायेण दृष्टान्तावाह—ण अ इति। तरुणम् अशुष्कं च तद् ग्रन्थीति, "भक्षयेदनिलमेष कषायो ग्रन्थिपर्णमिव गन्ध-कुरङ्ग" इति चरकोक्तेः। "कंदल्यंकुर उद्भेद" इति रत्न-माला। गन्ध-हरिणो गर्व-युक्त-कुरङ्गः। "गन्धः संबन्ध-गर्वयोरि"ति समासः।

निरर्गला अकुण्ठिता वाक् यस्य। "निरर्गल-वागसे" इत्यस्य अर्गलं विना संचरसीति महाराष्ट्र-भाषायाम् अर्थान्तर-चमत्कारः।

"परकीये तु परकेरअमि"ति त्रिविक्रमः। मम किं प्रयोजनमिति भावः। समाधानस्य मेखला-जीवन-साधन-प्रणिधानस्य।

प्रा० प्र०—पुराण-पत्रमविदार्य न पल्लवं समुल्लसति, न च तरुण-ग्रन्थिपर्ण-कन्दली-कवलन-लुब्धो गन्ध-हरिणो मदन-केदारिकायाम् अभिरमते। "ग्रन्थिपर्णं शुकबर्हमि"त्यमरः। कन्दली उद्भेदः। गन्धो गर्वः। मदनकेदारिका शाकिनीपालिः। "आरण्य-शाकिनीपालिः स्मरकेदारिका स्मृते"ति वैजयन्ती।

[ संस्कृतच्छाया—विदूषकः] किं मम परकीयया चिन्तया। तस्माद् भण्यसे, मा समाधान-भङ्गं मे कुरु। देव्याः पुरतो मेखला जीवयितव्येति।

1. V. r. पुराणपत्तं वेल्लिं वज्जिय जणो ; पुराण-पत्तमपेल्लिअ।
2. V. r. णव-पल्लवो ; णव-पल्लवं। 3 V. r. समुल्लासेदि।
4 V. r. दवणअ-केदारिआए।
5. V. r. परकेरिकए। 6. V. r. तत्तीए। 7. V. r. समाधि।
8. V. r. देवी। 9. V. r. जीवइदव्वा ; जीवाविदव्वा।

( ततः प्रविशति देवी, प्रयता च मेखला, विभवतश्च परिवारः । )

देवी । हला सुलक्खणे ! अपि[1] संणिहिदो अंतेउर-दुवार-वट्टी[2] अज्जउत्तो चाराअणो[3] अ ।

सुलक्षणा । ण अण्णहा[4] देवीए[5] विण्णवीअदि ?

[6]देवी । ता देहि मे मग्गं ।

सुल । एदु एदु देवी ( इति परिक्रामति । ) अन्तेउर-दुवार एव्व भट्टा वट्टदि, ता उवसप्पदु देवी ।

देवी । ( उपसृत्य ) जेदु अज्जउत्तो ।

राजा । इत आस्यताम् ।

देवी । ( उपविश्य विदूषकं प्रति[6] ) अज्ज चाराअण ! देसु मे धत्तेइआ-भिक्खां[7] जीवावेसु मेहलअं ।

च० त०—प्रयता स्नान-जपादिभिः पवित्रा ।

चारायणो विदूषकः ।

प्रा० प्र०—[ संस्कृतच्छाया—देवी ]—हला सुलक्षणे, अपि सन्निहितोऽन्तःपुर-द्वारवर्ती भर्ता चारायणश्च ।

[ संस्कृतच्छाया—सुल ]—नान्यथा देव्यै विज्ञाप्यते ।

[ संस्कृतच्छाया—देवी ] तस्माद्देहि मे मार्गम् ।

[ संस्कृतच्छाया—सुल ] एतु देवी, अन्तःपुर-द्वार एव भर्ता वर्तते, तस्मादुपसर्पतु देवी ।

[ संस्कृतच्छाया—देवी ] जयत्वार्यपुत्रः ।

[ संस्कृतच्छाया—देवी ] आर्य चारायण, देहि मे धात्रेयिका-भिक्षां, जीवय मेखलाम् ।

---

1. V. r. अवि । 2. V. r. दुआर-पग्गीवे ; दुआर-पडीवे ।

3. V. r. चाराअण-बह्मणो । 4. V. r. किं अण्णधा ।

5. V. r. देवी । 6-6. V. r. विदूषकः । एदं पग्गीवं ता उअविसदु पिअ-वअस्सो । ( तथा कुरुतः ) । देवी । जअदु जअदु अज्जउत्तो ।

7. V. r. भिक्खं ।

विदूषकः । एस मज्जोह्मि ।

मेखला । ( बद्धाञ्जलिः ) अज्ज चारामण ! अअं[1] जणो तुमं महाबह्मणं[2] सरणं पडिवज्जदि । ( इति [3]पादौ शिरस्यारोपयति ) ।

नेपथ्ये । कहिं[4] सा दुट्ठ-दासी, एदे अह्मे काल-पुरिसा सिंखलाहिं[5] पाविआ[6] ।

विदूषकः । (भीत्वा बहु-विधं[7] दण्ड-काष्ठमुद्यम्य) जहिं[8] अहं पिङ्गलिआ-वल्लहो गन्धव्व-वेअ-विअक्खणो रक्खको चिट्ठामि । तहिं[9] को कालो के काल-पुरिसा[10] का वा काल-सिंखला[11] ।
( इति बहुविधं वल्गति ) ।

च० न०—भीत्वेति । मृषेति ज्ञातेऽपि परिहारस्यार्थे भीत्वेति कथनाद्विदूषकस्य भयं सहज-मेवेति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] एष सज्जोऽस्मि ।

[संस्कृतच्छाया—मेखला] आर्य चारायण, अयं जनस्त्वां महाब्राह्मणं शरणं प्रतिपद्यते ।

[ संस्कृतच्छाया—नेपथ्ये ] क्व सा दुष्ट-दासी, एते वयं काल-पुरुषाः शृङ्खलाभिः प्राप्ताः ।

[ संस्कृतच्छाया—विदूषकः ] यत्राहं पिङ्गलिका-वल्लभो गन्धर्व-वेद-विचक्षणो रक्षकस्तिष्ठामि तत्र कः कालः, के वा काल-पुरुषाः, का वा काल-शृङ्खला ?

पिङ्गलिकेति चारायण-पत्न्याः पुष्करमालाया नामान्तरम् ।

---

1. V. r. णअं (?) । 2. V. r. महाव्वह्मणं । 3. addr. तन् ।
4. कहिं कहिं । 5. V. r. संखलाहि ।
6. V. r. गले गाढं बंधिअ मेहलं णेदुं आअदा 7. addr. गीत्वा ; गीतं कृत्वा ।
8. V. r. जइ 9. V. r. ता ।
10. Add.r. अ । 11. V. r. ओ कालसिंखलाओ ।

मेखला । (पादयोरन्तरे प्रविशन्ती[1]) भो ! परित्ताअसु मं ।

विदूषकः । (उच्चैर्गायन्नपवार्य[2]) भो पेक्ख[3] विलासिणी-वह्ल-रहाहिरूढं[4] अत्तणो प्पिअ-वअस्सं । (किञ्चिदुच्चैः) भो भोः पेक्खध[5] मे बह्मणत्तणं जेण खलखलायिद-सिंखला पणट्ठा काल-पुरिसा[6] ।

मेखला । भो[7] ! जीविदह्मि

विदूषकः । (सास्फोटं विहस्य) आः दासीए सुदे[8] ! अलीअ-विवाह-विडम्बिदो कुद्धो[9] चाराअणो दे पडिकिदि-ववसिदो[10] ।

च० न०—गायन् गन्धर्व-द्योतनायेति भावः । राजानं प्रति अपवार्य रहसीत्यर्थः । विलासिनी स्त्री खलेनि यावत्, सैव ब्रह्म-रथो गो-रथः । "वहिलो" इति महाराष्ट्राः । आस्फोटः "किकली" इनि महाराष्ट्राः । प्रतिकृतौ प्रतीकारेषु व्यवसितः उद्युक्तः ।

प्रा० प्र०—[ संस्कृतच्छाया—मेखला ] भोः, परित्रायस्व माम् ।

[ संस्कृतच्छाया—विदूषकः ] अपवार्य रहसीति यावत् । भोः, पश्य विलासिनी-ब्रह्म-रथाधिरूढम् आत्मनः प्रिय-वयस्यम् । अप्पणो इत्यत्र "आत्मनि प"[11] इति पादेशः । भो भोः, पश्यत मे ब्राह्मण्यं यत् खलखलायित-श्रृङ्खलाः प्रनष्टाः काल-पुरुषाः । खलखलेति शब्दानुकारः ।

[ संस्कृतच्छाया—मेखला ] भो जीवितास्मि ।

[ संस्कृतच्छाया—विदूषकः ] आ दास्याः सुते, अलीक-विवाहेन विडम्बितः क्रुद्धश्चारायणस्ते प्रतिकृति-व्यवसितः ।

---

1. V. r. प्रविशति ।
2. V. r. अपवार्य omitted ।
3. V. r. पेक्ख पेक्ख महाराअ ।
4. V. r. विलासिनी-वम्मह-रहाहिरूढं ।
5. Add. r. पेक्खध repeated.
6. V. r. काल-पुरिसा पणट्ठा ।
7. V. r. अम्महे ।
8. V r. धीए ; दुधीए ।
9. V. r. दुक्कुद्धो ; दुक्कुरुद्धो ; कुज्जो णिवडिदो ।
10. दे चाराअण-बह्मणो ।
11. PPr. 3. 48 ; p.8.

ता[1] संपदं एत्तिअमेत्तं[2] आसंसे[3] दीहमभग्ग-कंकणा[4] भोदु मे बह्मणी । ( मेखला विलक्षा गेहिनि ) ।

देवी । अज्जउत्त ! जुत्तं ण[5] असरिसं णम्म[6], जं दाणीं दे[7] पिआ-सिणिह-भूमी[8] मेहला एवं विडंबीअदि ।

विदूषकः । भोदि[9] जुत्तं ण[10] असरिसं णम्म[11], जं दाणीं महाराअ-पिअ-वअस्सो तह विडंबिदो[12] ।

देवी । अज्जउत्त[13]-संबंधिओ त्ति तुए सह[14] वक्कं किदं ।

च० त०—आस्फोटः । "किकली" इति महाराष्ट्राः । प्रतिकृतौ प्रतीकारेष्ववमिनः उद्युक्तः ।

वक्करमिति देशीयः शब्दः । चोद्यं "विनोद" इति महाराष्ट्राः ।

प्रा० प्र०—तस्मात् साम्प्रतमेतावन्मात्रमाशंसे दीर्घमभग्न-कङ्कणा भवतु मे ब्राह्मणी ।

[ संस्कृतच्छाया—देवी ] आर्य-पुत्र, युक्तं न, असदृशं नर्म, यदिदानीन्ते प्रिया-स्नेह-भूमिर्मेखलैवं विडम्ब्यते ।

[ संस्कृतच्छाया—विदूषकः ] भवति, युक्तं न, असदृशं नर्म । यदिदानीं महाराज-प्रिय-वयस्यस्तथा विडम्बितः ।

[ संस्कृतच्छाया—देवी ] आर्यपुत्र-सम्बन्धिक इति त्वया सह चोद्यं कृतम् ।

---

1. V. r. no ता । 2. V. r. एत्तिकं ।
3. V. r. आसंसीअदि । 4. V. r. सए भग्ग-कंकणा ; दीह-समग्ग-कंकणा ।
5. V. r. णेमं ; णणेदं । 6. V. r. सरिसं णेमं ।
7. V. r. मे । 8. V. r. पिय-सही । 9. V. r. भोदीए ।
10. V. r. णणेमं । 11. V. r. सरिसं णेमं ; सरिसं णणेमं ।
12. V. r. तधा विडंबीअदि । 13. V. r. अज्जस्स ।
14. V. r. सह एदाए ।

विदूषकः। भोदि, संबंधिणी त्ति तए सह मए पडि-[1] वक्करं किदं।

मेखला। देवि, ण[2] सक्कीअदि एस उत्तरेहिं पराजेदुं[3] महाराओ एदुस्स[4] गुरुः। केअइ-कुसुम-वासिदस्स खदिरस्स[5] अण्णो गंधुग्गारो।

( देवी कोप-नाटितकेन सपरिवारा निष्क्रान्ता )।

विदूषकः। ( पार्श्वमवलोक्य ) भो[6] संपदं णिम्मक्खिअं महु पिवस्सामो[7]।

च० न०—वासितस्य स्थापितस्य, खदिरस्य "कातगोली" इति महाराष्ट्राः। अन्यः अतिशयवान्। गन्धस्य परिमलस्य। उद्गारः उदय इति यावत्। केतकी-खदिर-दृष्टान्तौ राज-विदूषकयोरुह्यौ। तथा च राज-बलादेव वल्गतीति भावः।

"मक्षिकाणामभावस्तु निर्मक्षिकमि"त्यगस्त्यः। स्वच्छन्दं विहराव इति भावः।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] भवति, सम्बन्धिनीति तया सह मया प्रतिचोद्यं कृतम्।

[ संस्कृतच्छाया—मेखला ] देवि, न शक्यते एष उत्तरैः पराजेतुं, महाराज एतस्य गुरुः। केतकी-कुसुम-वासितस्य खदिरस्यान्यो गन्धोद्गारः।

एवं वर्णयता कविना स्वस्य महाराष्ट्रत्वं प्रकटीकृतम्। तत्तदीय एव बाल-रामायण-नाटके प्रसिद्धम्।

[ संस्कृतच्छाया—विदूषकः] भोः, साम्प्रतं निर्मक्षिकं मधु पास्यामः।

---

1. V. r. मए वि।
2. V. r. देवी।
3. V. r. उत्तरं दादुं पराजेदुं अ।
4. V. r. एव्व से।
5. V. r. खदिर-सारस्स वि।
6. V. r. no भो।
7. V. r. मे पिअ-वयस्सस्स।

राजा । अतिविलक्षा देवी, यतो रुदती गता ।

विदूषकः । रुददु रुददु, किं मे मोत्तिआओ गलिस्संति । ता इदो उज्जाणाहिमुहं एदु पिअ-वअस्सो । (इति परिक्रामतः) ।

विदूषकः । भो मह कण्ठ[1]-ट्ठाविद-पाणी मसिण-णिवेसिद-पाद-मुद्दं संचर । जदो बहलालि-उल[2]-णिम्मिदं व[3], तेल्ल-भज्जिद-कज्जल-पुंज-संजणिदं व, तारेंदणील[4]चुण्ण-संभूदं व, सिरिकण्ठ[5] कण्ठ-समुत्थिदं[6] व, णाराअण-तणु-विणिग्गदं व, मिअंक-कलंक-णिग्गलिदं[7] व, कुवलअ-वण[8]-परिकप्पिदं व, करि-करट-तड-दाण-प्पवट्टिदं[9] व तिमिर-चक्कवालं अणभिण्णाद[10]

च० त०—गलिष्यन्तीति । आभाणकोऽयं महाराष्ट्रीयः ।

मसृणं मृदु निवेशिना न्यस्ताः पाद-मुद्राः यथा तथा । "वसे" इति महाराष्ट्राः । तैलेषु भर्जितानि पक्कानि अतिनैल्याय मिश्रितानि इति यावत् ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] रोदितु, रोदितु, किम् अस्या मौक्तिकानि गलिष्यन्ति । तस्मादित उद्यानाभिमुखम् एतु प्रिय-वयस्यः ।

[ संस्कृतच्छाया—विदूषकः ] भोः, मम कण्ठ-स्थापित-पाणिर्मसृण-निवेशित-पाद-मुद्रं सञ्चर । यतो बहलालि-कुल-निर्मितमिव, तैल-भर्जित-कज्जल-पुञ्ज-सञ्जनितमिव, तारेन्द्र नील-चूर्ण-सम्भूतमिव, श्रीकण्ठ-कण्ठ-समुत्थितमिव, नारायण-तनु-विनिर्गतमिव, मृगाङ्क-कलङ्क-निर्गलितमिव, कुवलय-वन-परिकल्पितमिव, करि-करट-तट-दान-प्रवर्तितमिव तिमिर-चक्रवालम्

---

1. V. r. करे ।
2. V. r. पडल ।
3. Add. r. कोइल-कुल कलिद-जम्मेव्व ।
4. V. r. इन्दणील ।
5. V. r. सितिकण्ठ ; सिदिकण्ठ ।
6. V. r. संघडिदं ।
7. V. r. णिक्कालिदं ।
8. V. r. दल ।
9. V. r. करि-दानप्पअदं ; करि-दाणप्पवित्तं ।
10. V. r. अविरणाद ।

सम-विसमं अणिच्चिद[1]-साम-धवलं अपरिच्छिण्ण-लहु-दीहं अण-धिगद-दिअह-रत्ति-भाअं अ[2] भुअण-गब्भंग्गणं करेइ[3] ।

राजा । एवमेतत् ।

तनु-लग्ना इव ककुभः क्ष्मा-वलयं चरण-चार-मात्रमिव[4] ।
वियदपि चालिकदघ्नं मुष्टि-ग्राह्यं तमः कुरुते ॥६॥

च० त०—तारा महान्तश्च ते इन्द्र-नीलाः मणयः । "काकेभ-गण्डौ करटावि"त्यमरोक्तेः करि-करटेति कथनं पुनरुक्तिः कवेः प्रमादः । तथापि "वंश-करीर-नीलैरि"ति[5] माघ-प्रयोगवद्दयया क्षन्तव्यः । दानानि मद-जलानि । चक्रवालं मण्डलं कर्तृ । सम-विषम-स्थलं श्याम-धवल-रूपं लघु-दीर्घ-भावं दिवस-रात्रि-विभागमिति यथोचितमूह्यम् । अंगनं कर्म ।

तन्विति । मुष्टि-ग्राह्यं तमः कर्तृ । ककुभो दिशः । तनुः वपुः तत्र लग्ना इव कुरुते । क्ष्मा-वलयं भू-मण्डलं पद-सञ्चार-मात्रमिव कुरुते । "मात्रं कार्त्स्न्येऽव-धारण" इत्यमरः । अपि च, वियत् गगनम् अलिकदघ्नं ललाट-प्रमाणं कुरुत इत्यनुषङ्गः । तथा च तिमिरस्य कवलित-भुवनत्वात् पुरः पश्चात् पार्श्वयोरध ऊर्ध्वं च तिमिरं विना वस्त्वन्तरं नास्त्येवेति भासत इति भावः ॥६॥

प्रा० प्र०—अनभिज्ञात-सम-विषमम् अनिश्चित-श्याम-धवलम् अपरिच्छिन्न-लघु-दीर्घम् अनधिगत-दिवस-रात्रि-भागश्च भुवन-गर्भाङ्गनं करोति ।

ककुभो दिशः । मुष्ट्या ग्राह्यं मुष्टि-ग्राह्यमिति नैबिड्य-भर-सूचनाय । "तिमिरस्य तथा मुष्टि-ग्राह्यत्वं सूचि-भेद्यते"ति कवि-कल्पलतायामभिधानात् ।

---

1. V. r. अणिएणीद । 2. V. r. अणधिगद-दूर-सरिणाहिदं ।
3. V. r. करेदि । 4. V. r. पालमिव ।
5. ŚiśV., 4. 14. p, 164

( किञ्चित्तर्कयामि )—

उत्तंसः केकि-पिच्छैर्मरकत-वलय-श्यामले[1] दोःप्रकाण्डे
हारः सान्द्रेन्द्रनीलैर्मृगमद-रचितो वक्त्र-पत्र-प्रपञ्चः ।
नीलाब्जैः[2] शेखर-श्रीरसित-वसनता चेत्यभीकाभिसारे
संप्रत्येणेक्षणानां तिमिर-भर-सखी वर्तते वेष-रेखा[3] ॥७॥

च० त०—तिमिर-प्रकरण-वशादभिसरणमुद्दिश्यति उत्तंस इति। कर्णयोरिति शेषः। दोः-प्रकाण्डे भुज-श्रेष्ठौ। प्रकांड-शब्दः प्रशस्त-वाची। प्रथमा-द्विवचनमेतत्। वक्त्र-शब्देन ललाटं लक्ष्यते, फालेति वा पाठः। पत्रस्य तिलकस्य प्रपंचः विस्तारः। "गुरु-तिलकयोः पत्रमि"ति गोवर्धनः। मृग-मदेन कस्तूर्या रचितः। शेखरस्य श्रीः शोभा, शिरसीति शेषः। वसनं वस्त्रम्। इति उक्त-प्रकारेण तिमिरातिशय एव सखी। सादृश्य-करणात् सखीति व्यपदेशः। सांप्रतं मृग-दृशाम् अभीकान् कामुकान् प्रति अभिसारे अभिसरणे। "कान्तार्थिनी तु या याति संकेतं साऽभिसारिके"त्यमरः। वेष-प्राया प्रायेण वेष-रूपा वर्तते। "रेखा प्रायांश-राजिष्वि"ति शब्द-माला। तथा चैवं गाढं तम एव अभिसरन्तीनामितर-जनावेद्य-वेष-भूषण-प्रायं निज-रूपं वर्तत इति भावः। अत एव "रजनी-तिमिरावगुण्ठित"[4] इत्यादि भर्तृमीढः। ईदृशीनामीदृश-साहस-कर्मणि तिमिर-भरितायां रजनावपि सिद्धांजन-लिप्तानीव लोचनानि प्रगल्भन्त इति सूचयितुम् एणे-क्षणानामिति प्रयुक्तम् ॥७॥

प्रा० प्र०—वेष-रेखा वेष-प्रायेति यावत्। एतेन कृताभिसारिका वर्णितेऽन्यूह्यम्।

---

1. V. r. वलयैः श्यामलैः।
2. V. r. नीलाब्जे।
3. V. r. वेष-लीला।
4. KumS., 4. 11. p. 64.

( नेपथ्ये— )

कट्ठिद[1]दुद्ध-मुद्ध-कर-तरलिअ-जलणिहि-सलिल-संचओ
तिहुवण-भवण-विच्छुरणच्छ-सुहा-रस-धवल-कुच्चओ ।
चंदो मअण-वल्लि-पल्लवण-महो सहि सरिस-जोह्नओ[2]
पुव्व-दिसा-मुहम्मि उम्मिलइ चन्दण-पङ्क-कलिलोव्व ललिओ[3] ॥८॥

च० न०—अथ कल-कंठी गद्य-पद्याभ्याम् इन्दुं वर्णयति कट्ठिदेति । दुग्धवन्मुग्धैः किरणैस्तरलितः उल्लोल-कल्लोलितः । अति-धावल्य-सूचकः कट्ठी-शब्दो देशीयः । "कटिले" इति महाराष्ट्राः । संचयः समूहः ध्वनिश्च । अथवा "वार-संघात-संचया" इति, "तारास्थि-संचयमि"त्यमर-क्षेमेन्द्रयोरिव प्रयोगोऽयं क्षन्तव्यः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । तदेव भवनं तस्य विच्छुरणाय क्रमेण प्रकाशनाय अच्छो निर्मलः अत एव सुधा-रसवद्धवलश्चासौ कूर्चको दर्पणः । "अच्छो विमल-निर्मलावि"ति, "दर्भ-स्तूपे भ्रुवोर्मध्ये दर्पणे कूर्चकोऽस्त्रियामि"ति धरणि-गोवर्धनौ । सखि देवीति संबोधनम् । अथवा "सही-सरिस-जोह्नओ" इति पाठः । सख्याः सदृशी ज्योत्स्ना नाम स्त्री यस्य स तथोक्तः । "दासीवच्च सखीवच्चे"ति वाल्मीकिरित्यूह्यम् । अत्र वस्तुनः सखि मृगांकावलि, यथा त्वया सदृश-वल्लभो विद्याधरमल्लस्तथा सदृश-ज्योत्स्नः चन्द्र इति विचक्षणयोक्तमिव ध्वनि-मात्रं, न तु वास्तवम्, "भो कलअट्ठी"त्यादि-विदूषक-वक्ष्यमाण-मूल-वाक्य-विरोधादिति दिक् । पंकैः कलिलः "कलिलं गहनं समे" इत्यमरः । वचिति (?) इवेति यावत् । भङ्ग्यन्तरेण पांडिमा वर्णित इति बोध्यम् । "ललितं मृदु-रम्ययोरि"ति विश्वः ॥८॥

प्रा० प्र०—[ संस्कृतच्छाया—नेपथ्ये ]

कथित-दुग्ध-मुग्ध-कर-तरलित-जलनिधि-सलिल-सञ्चय-
स्त्रिभुवन-भवन-विच्छुरणाच्छ-सुधा-रस-धवल-कूर्चकः ।
चन्द्रो मदन-वल्ली-पल्लवन-महो सखि सदृश-ज्योत्स्नः
पूर्व-दिशा-मुखे उन्मीलति चन्दन-पङ्क-कलिल इव ललितः ॥८॥

---

1. V. r. आवट्टिअ; आवट्टिअ । 2. V. r. सिरिसं जोअरुओ ।
3. V. r. जअइ अणंग-केलि-भवणंगण-चंदण-पंक-वरणओ ।

अपि च—

जणाणंदो चंदो लसइ[1] मलिणी होइ णलिणी
[2]विसप्पन्ते तारा रअणि-सिरि-हारा दिसि दिसि[3] ।
रहंगा तत्तंगा[4] विरह-सिहिणा दड्ढ-विहिना[5]
इमे दुक्खक्कंता ससि-कर-किलंता[6] विहडिदा[7] ॥९॥

च० त०—साङ्कमिंदुं वर्णयति जणेति। जनानामानन्दो यस्मात्। चन्द्र इति पाठे "द्रे रो वेति[8] विकल्पाद्रेफादेशः। नलिनी मलिनीभवतीत्येकं पदम्। रजनि-श्रियः रात्रि-लक्ष्म्याः हाराः हार-सदृश्यः। तारा नक्षत्राणि। दिशि दिशि विशेषेण सर्पन्ति। विसप्पन्ते इत्यात्मने-पद-प्रयोगो "हसए हसइ इत्यपी"ति प्राकृत-चन्द्रिका-न्यायावलंबेन दयनीयः। अथवा सेवादिं पवति(?) द्वित्व-विकल्प-न्यायमंगीकृत्य प्राकृते विसप्पन्ति तारा इति पाठः। अत एव "णिहत्थं णिहत्तं गहत्थेहिं" इति कर्पूर-मंजरी-नाम्नि सट्टके अमुनैव कविनोक्तम्। कौदुहल्लमित्यानन्दसुन्दरी-नाम्नि सट्टके नाथ-चरणैरप्यभिहितम्।

प्रा० प्र०—अपि च—

जनानन्दश्चन्द्रो लसति मलिनीभवति नलिनी
विसर्पन्ति तारा रजनी-श्री-हारा दिशि दिशि ।
रथाङ्गास्तप्ताङ्गा विरह-शिखिना दग्ध-विधिना
इमे दुःखाक्रान्ताः शशि-कर-क्लान्ता विघटिताः ॥९॥

"इत् श्री-क्लान्त-ह्री-क्लेश-म्लान-स्वप्न-हर्षेष्वि"[9]ति सूत्रेण सिरि-किलन्ता इत्येतयोः सिद्धिः।

---

1. V. r. हसइ। 2. V. r. विसट्टन्ते।
3. V. r. दहदिहं। 4. V. r. ढज्जंगा, दड्ढंगा ; उड्डंगा।
5. V. r. दड्ढ-विहिणा ; दुट्ट-विहिणा। 6. V. r. ससि-कर-किलिंता।
7. V. r. विहलिदा, विहडिता। 8. PPr., 3. 4, p. 61.
9. PPr., 3. 62, p. 90, इः-श्री-ह्री-क्रीत-क्लान्त-क्लेश-म्लान-स्वप्न-हर्ष-स्पर्शार्ह-गर्हेषु।

( पुनर्नेपथ्ये— )

ये पूर्वं यव-सूचि-सूत्र-सुहृदो ये कैतकाग्रच्छद[1]-
च्छाया-साम्यभृतो मृणाल-लतिका-लावण्यभाजोऽनु[2] ये।

च० त०—क्लान्ताः दुःखेनाक्रान्ताः। दग्धः विधिः विधानं स्त्री-संयोगं विना प्रतिक्रिया दैवं च येन। "विधिर्विधाने दैवेऽपी"त्यमरः। विरह-शिखिना वियोगाग्निना। नग्नानि अंगानि अन्तरंग-बहिरंगाणि येषाम्। इमे रथाङ्गाः चक्रवाकाः विघटिताः स्त्रीभिरिति शेषः। अत्र रथाङ्ग-नामान इति वक्तव्ये रथाङ्गा इति कथनं कवेः प्रमादः, "रथाङ्गाह्वय-नामक"[3] इति "रथाङ्ग-नाम्नोरिवे"[4]त्यमरसिंहेश्वरकृष्ण-मिश्राभ्यामभिधानात् ॥९॥

पुनर्नेपथ्ये इत्येतत् कवेरचातुर्यं वाक्यान्तरेण व्यवधानाभावात्। वस्तुतस्तु पुनर्नेपथ्य इति पाठस्याग्रहे"विहडिआ" इत्यस्य "पुनर्नेपथ्य" इत्यस्य च मध्ये राज-विदूषकावाकर्ण-यत इति पाठश्च कल्प्यः। अन्यथा पुनर्नेपथ्य इत्येतदजा-गल-स्तनायत इति दिक्।

अथ कर्पूर-चण्डो द्वाभ्यामिन्दुं वर्णयितुमारभते—य इति। पूर्वम् आदौ उदय-समये इति यावत्। यच्छब्दैः कराः परामृश्यन्ते। यव-सूचेः यव-प्रान्तस्य। प्रायेण वंगाल-विशेषजा यवाः पक्वता-दशायां प्रान्तयोः शुभ्राः सूक्ष्मतराश्च भवंति। "जघ" इति महाराष्ट्राः। "अयोरेखा-विशेषे स्त्री सूचिः प्रान्ते च सूच्यपी"ति धनंजयः। सूत्रस्य गुणस्य च "दोरा" इति महाराष्ट्राः। सुहृदः सदृशाः। अनु पश्चादिति मुकुटः। कैतकः केतकी-संबन्धी चासावग्रच्छदः अग्रत्व-विशिष्टश्छदः, पर्णाग्रमिति यावत्। तस्य छाया रूपं तस्य साम्यभृतः सादृश्य-धराः। "छाया कान्तौ च रूपे चे"ति विक्रमार्कः। अन्वित्यस्यानुषङ्गः। बिस-लतानां लावण्यं सौन्दर्यं भजंतीति

---

1. V. r. केतकाग्रच्छद।
2. V. r. भाजोऽत्र।
3. AK., 2. 5, 23, p. 66.
4. RaghuV., 3. 24, p. 97.

ये धाराम्बुविडम्बिनः क्षणमथो ये नार-हार-श्रिय-
स्तेऽमी स्फाटिक-दण्ड-डम्बर-जितो[1] जाताः सुधांशोः कराः ॥१०॥

अपि च—

सद्यश्चन्दन-पङ्क-पिच्छिलमिव व्योमाङ्गणं कल्पयन्
वश्यैरावत[2]-कान्त-दन्त-मुसलच्छेदोपमेयाकृतिः ।
उद्गच्छत्ययमच्छ-मौक्तिक-लता-प्रालम्ब-लम्बैः करैः
कान्तानां[3] स्मर-लेख-वाचन-कला-केलि-प्रदीपः शशी ॥११॥

च० त०—भाजः । क्षणं वृष्टि-धारा-रूपं विडंबयंति हसंतीति विडंबिनः । "अथो अथे"त्यमरः । नार-हाराणां महामुक्तावलीनां श्रीरिव श्रीः शोभा येषां तेऽमी त एते सुधांशोश्चन्द्रस्य कराः किरणाः । सांप्रतमिति शेषः । स्फटिक-संबंधिनः स्फाटिकाश्च ते दण्डाः तेषां डंबरं जयंतीति जितः । "डंबरो रुचि-गर्वयोरि"ति धरणिः । जाताः । तथा च प्रतिक्षणं कराः स्थूला धवलाश्च भवंतीति भावः । अत्र त्रिषु स्थलेषु 'अनु' 'क्षणम्' 'अथो' इति पृथक् पृथक् कथनात् कैतकाग्रेत्यत्र तदकथनात् प्राय-पाठ-विरोधो "न स्थातुं न पलायितुं न चलितुं नोन्मीलितुं मीलितुमि"त्यादिवत् क्षन्तव्यः ॥१०॥

सद्य इति । व्योमांगणं गगनाजिरं कर्म सद्यस्तप्तानि घृतानि सद्यो घृतानीतिवत् सद्यो घृष्टानि चन्दनानि सद्यश्चन्दनानि तेषां पंकः कर्दमः स एव पिच्छिलो विजलो यस्मिन् तत् । "पिच्छिलं तु विजलमि"त्यमरः । निर्जल-चन्दन-पंकैः परामृष्टमित्यर्थः । लिप्तमिवेति यावत् । कल्पयन् धवलीकुर्वन् । वश्यो विनीतश्चासौ ऐरावतः । तस्य कान्ताः मनोहराश्च ते दन्ता एव मुसलाः तेषां छेदाः निकृत्तताः ताभिरुपमातुं योग्या उपमेया आकृतिः आकारो यस्य । अतिपांडर इति यावत् । मौक्तिकानां लता-रूपाणि यानि प्रालंबानि तद्वल्लंबैः दीर्घैः । "प्रालंबमृजु-लंबि स्यात् कण्ठाद्वैकक्षिकं

प्रा० प्र०—पिच्छिलं परामृष्टम् ॥११॥

1. V. r. डम्बर-चितो । 2. V. r. पश्यैरावत । 3. V. r. मुग्धानां ।

विदूषकः । भो[1] कलअट्ठी[2] णाम देवीए[3]णट्टाअरिणी[4], ताए[5] वअणादो सुणिअ[6] चंदोदय-होआवलीं[7] कप्पूरचंड[8]-णामधेयो देवस्स[9] मागधो अहिणंदेदि मिअंकुज्जोतलच्छिं[10] वण्णिदुं[11], ता मम[12] विच्छुरदि[13] तुंड-कंडूः[14] अहं पि वण्णिस्सं ससि-गोल-आहि[15]गलिदो जोण्हा-घडिआ-रसो समीकुणइ[16] णक्खत्तक्खर-वलअं[17] णह-फलए तिमिर-कज्जलए[18] ।

च० त०—तु तदि"त्यमरः । करैः किरणैः साधनैः । कान्ताश्च कान्ताश्च कान्ताः स्त्री-पुरुषा-स्तेषाम् । कलायां शिल्पे । अयं शशी । उद्गच्छति ऊर्ध्वं याति ।।११।।

नाट्यस्याकरः । "खनिः स्त्रियामाकरः" इत्यमरः । सोऽस्या अस्तीति नाट्या-

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] भोः, कलकण्ठी नाम देव्या नाट्याकरिणी, तस्या वदनाच्छ्रुत्वा चन्द्रोदय-भोगावलिं कर्पूरचण्ड-नामधेयो देवस्य मागधोऽभिनन्दति मृगाङ्कोद्योत-लक्ष्मीं वर्णयितुम् । आकरः खनिः । तस्मान्मम विच्छुरति तुण्ड-कण्डूः, अहमपि वर्णयिष्यामि । तुण्डं मुखम् । तोण्डेति पाठे "उत ओत्तुण्ड-रूपेष्वि"ति[19] ओकारः । शशि-गोलकाभिगलिता ज्योत्स्ना-घटिका-रसः समीकुरुते नक्षत्राक्षर-वलयं नभः-फलके तिमिर-कज्जलके ।

---

1. V. r. एषा ; एषा भोः ।
2. V. r. कलकण्ठो ।
3. V. r. देवी ।
4. V. r. पडिआरिणी ; णागरिणी ।
5. V. r. तीए ।
6. V. r. पुरिणामा ।
7. V. r. चन्द्रोदयं ।
8. V. r. कप्पूरचंद ।
9. V. r. no देवस्स ।
10. V. r. मिअंकुज्जोअ-लच्छिं ।
11. V. r. no वण्णिदुं ।
12. V. r. ममापि ; महवि ।
13. V. r. वट्टदि ; वड्ढदि ।
14. V. r. तुण्ड-कंडुदि ।
15. V. r. ससिवोलआहिं ; ससिवालो इह लिंहओ ।
16. V. r. मलीकुणइ ।
17. V. r. मालं ।
18. V. r. तिमिर-कज्जलीलिहिदं, कज्जलिए, कज्जलिह ।
19. PPr. I. 20.

च० त०—करिणी नाट्याचार्येति यावत्। "वर्णना-पद्धतिर्भोगावलिरि"ति धनंजयः। मागधो वन्दी। उद्द्योतस्य प्रकाशस्य। विच्छुरति स्फुरति। "तोग्ड" इति महाराष्ट्राः। ससीति। शश्येव गोलकः तस्मादभि अभितः गलितः च्युतः ज्योत्स्ना-घटिका-रसः। तिमिरमेव कज्जलकं यस्मिन्। नभ एव फलकं पीठं तस्मिन्। नक्षत्राण्येव अक्षराणि तेषां वलयं समीकुरुत इति नाथ-चरणाः। अथवा गोलकाद् ब्रह्माण्डात्। "गोलः कटाहो ब्रह्माण्डमि"ति केदारः। अभि नक्षत्राणाम् अभिमुखं यथा तथा। गलितो निःसृतः। घट्येव घटिका कलशः। "द्वयोर्घट" इत्यमरः। "कांचन-घटी"ति भगवत्पादाः। तस्यां विद्यमानो रसः लेखन-साधन-मषी-प्रत्याम्नाय-श्वेत-मृत्तिका-द्रवः। तथा च ज्योत्स्नैव घटिका-रसो यस्य। "अपि माषं मषं कुर्याच्छन्दोभंगं तु नाचरेदि"ति कवन-मात्रे कवि-समयात् संस्कृत-न्यायमादाय प्राकृते ससी इति वक्तव्ये ससि इति ह्रस्वतया प्रयोगः, शशी इत्यर्थः। अत एव अग्गि अग्गी वा। उ वा ऊ "सूलि सूलींद्रमादिश" इति प्राकृत-दीपिका, "एसो वज्जिसद्दो" इति डिंडिमः प्रयोगश्च। तिमिर-कज्जलके नभःफलके नक्षत्राक्षराणां वलयं पंक्तिम्। "वलयं मण्डलं जालं चक्रं पंक्तिश्च जालकमि"ति रुद्रः। समामिति। समां समानां गगनस्थिति-धावल्य-धगधगायमानत्वादि-गुणेष्वविषमां करोति, लिखतीति यावत्। चन्द्रस्य द्विजेन्द्रतया द्विजेन्द्रस्य च वर्णाभ्यासादिकं विध्युक्तमिति भावः। यद्वा मया लक्ष्म्या सहितां समां करोति लिखतीति यावदित्यर्थः। चन्द्रो ज्योत्स्ना-रूप-श्वेत-मृद्वता तिमिर-नीलीकृते गगन-पीठे नक्षत्र-व्याजेन अक्षराणि लिखतीति भावः। प्रायेणान्ध्र-जातिष्वयं संप्रदायः प्रसिद्धः। अक्खरेति कालिदासादीनामिव कवेः प्रमादः। "अक्ष्यादिषु छ" इति छत्व-विधानेन अक्ष्यादि-गण एवाक्षरस्यापि पठिततया अच्छरेति वक्तव्यस्य साधीयस्त्वात्।

प्रा० प्र०—वलयं पङ्क्तिं समीकुरुते सदृशीकरोति। कृष्ण-पक्षेऽधिक-कान्तिरुडु-गणः सम्प्रति ज्योत्स्ना-रुचि-भरेण सदृश-कान्तिरिति भावः। "घटिकारस उक्तोऽयं चाक-चक्यस्य यो भरः" "वलयं मण्डले पङ्क्ताविति" वैजयन्ती।

राजा। सखे! नाद्यापि शैशवोक्तेरतिरिच्यसे[1]।

विदूषकः। किं विअ मुक्कडो[2] वरिट्ठाणं[3] करणिज्जं पुच्छइ[4]। तरुणुत्तीहिं वण्णइस्सं

अकंकणमकुंडलं धरणि-मंडली-भूसणं[5]
अकुंकुममचंदनं दस-दिसा-वहू-मंडणं[6]।

च० त०—अथ नील-फलके श्वेताक्षर-लेखनस्यान्ध-बटुष्वनुभव-सिद्धेराह—शैशवे बाल्य इव उक्तेः कथनात् नातिरिच्यसे अधिको न भवसि, अद्यापि नैव प्रौढ-वागसीति भावः।

अहं भवतो दृष्ट्या मर्कटः। भवानेव वरिष्ठ इति परिहास-कोपाभ्यामाह किमिति। मर्कटः किमिव करणीयं वरिष्ठानां पृच्छति न किमपीत्यर्थः। 'वरिट्ठा' वरिष्ठानिति, 'णं' नन्विति पद-द्वयं वा बोध्यम्। "निश्चयार्थे विरोधोक्तौ नन्वि"ति नाम-निधानम्। संकोचन्निर्वहन्नाह तरुणेति। वर्णयिष्यामि किरणावलीमित्यूह्यम्।

अकंकणमिति। कंकणं न भवतीत्यकंकणम् कंकणाद्भिन्नम्। एवं सर्वत्र ज्ञेयम्। धरणि-तनयेति नाथ-चरण-व्याकृत-लक्ष्मण-चंप्वाम्। मण्डल्याः "मण्डलं त्रिष्वि"त्यमरः। भूषणम् अकुंकुममित्यत्र ध्वनिरिव सन्ध्यभावः कवेः प्रमादः। तथापि "एदं अंबुदमंबु-राशिकदुअमि"ति भासमल्लस्येव क्षन्तव्यः। "यथा वाचा निशा दिशे"ति स्मरणाद्दिशा-वधू-मण्डनमिति साधुः। अत एव "विनतमथ दिशायामि"ति नाथ-चरण-व्याकृत-

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] किमिव मर्कटो वरिष्ठानां करणीयं पृच्छति।

अत्र महाराष्ट्र-व्यवहार-प्राबल्येन वरिष्ठानाम् इति षष्ठी-निर्देशः कृतः। करणीयं युक्त-कार्यं मया न पृष्टोऽसीति भावः।

तरुणोक्तिभिर्वर्णयिष्यामि—

अकङ्कणमकुण्डलं धरणि-मण्डली-भूषणम्
अकुङ्कुममचन्दनं दश-दिशा-वधू-मण्डनम्।

---

1. V. r. अतिरिच्यते। 2. V. r. मक्कडो।
3. V. r. उवट्ठाणं। 4. V. r. करंतो चुक्कदि। अहवा।
5. V. r. दस-दिसा-बहू-मंडणं। 6. V. r. अचंदनमकुंकुमं धरणि-मंडलीभूसणं।

अशोसणमसोहणं मअर-लंछणस्साउहं
मिअंक-किरणावली णह-थलम्मि[1] लक्खीअदि[2] ॥१२॥

राजा । ( समन्तादवलोक्य मदनाकूतमभिनीय ) भगवन् यामिनी-नाथ ! कस्तवायं विरुद्धो विधिः ?

सूतिर्दुग्ध-समुद्रतो भगवतः श्री-कौस्तुभौ सोदरौ
सौहार्दं कुमुदाकरेषु[3] किरणाः पीयूष-धाराकिरः ।

च० त०—भोज-चंप्वाम् । शोषणं मोहनमिति चास्त्र-विशेषौ । मकर-लांछनस्य मन्मथस्य । "आयुधं तु प्रहरणं शस्त्रमि"त्यमरः । आयुध-किरणावल्योर्भिन्न-लिङ्गत्वेऽप्यक्षुण्ण एव विशेषण-विशेष्य-भावः । अत एव "तदुपमा-कुसुमान्यखिलाः शरा"[4] इति श्रीहर्षः ॥१२॥

मदन-विषये आकूतम् अभिप्रायम् । "साकूत-सस्मिते"ति गोपी-नाथः । भगवन् श्रीमन् । विरुद्धः सहज-गुण-प्रतिकूलः । विधिः रीतिरिति यावत् ।

तामेव स्पष्टयति सूतिरिति । स्थाणु-चूडामणे हे चन्द्र । भगवतः महात्मनः । दुग्ध-समुद्रतः क्षीर-सागरात् । ते तव, सर्वत्रेदमूह्यम् । सूतिः जन्म । लक्ष्मी-कौस्तुभ-मणी, सोदरा च सोदरश्च सोदरौ भगिनी-भ्रातरौ । "सोदरी-निलये"ति श्रीहर्षस्य प्रमादः । "सोदर्येव न सोदरी"ति समय-पद्धतेः । कुमुदानां कैरवाणाम् । आकरेषु खनिषु । सौहार्दं मैत्री । धाराः किरंति वर्षतीति । आकरा इत्ययुक्त-पाठः, पुनरुक्तेः । स्पर्धा प्रातिभाव्यम् । तदिति कवेः प्रमादः । अव्ययानामनेकार्थत्वादत्र तच्छब्दस्य एवं सतीत्यर्थः । अत एव "अर्थात् प्रकरणाल्लिङ्गादि"त्यादि प्रामाणिक-विशेषज्ञाः । अर्थाद् वस्तुन इति तात्-

प्रा० प्र० अशोषणमसोहनं मकर-लाञ्छनस्यायुधं
मृगाङ्क-किरणावली नभस्थले लक्ष्यते ॥१२॥

---

1. V. r. णाह-तलम्मि ।
2. V. r. पुंजिज्जइ ; पुंजिज्जए ।
3. V. r. कुसुमाकरे च ।
4. V. r. NaiṣC., 425. p. 241.

स्पर्धा ते वदनाम्बुजैर्मृग-दृशां तत् स्थाणु-चूडामणे !
हंहो चन्द्र ! कथं निषिञ्चसि[1] मयि ज्वालामुचो वेदनाः[2] ॥१३॥
( चतुर्दिशमवलोक्य[3] )
तन्त्र[4]-द्रावित-कैतकोदर-दल-स्रोतःश्रियं बिभ्रती
येयं[5] मौक्तिक-दाम-गुम्फन-विधेर्योग्या च्छविर्द्रागभूत्[6] ।
उत्सेक्या[7] कलसीभिरञ्जलि-पुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्ध-विभवे सा चन्द्रिका वर्तते ॥१४॥

च० त०—पर्यम् । कथं मयि ज्वालाः मुंचंति मुचः । वेदना बाधाः । निषिंचसि । "हंहो आश्चर्य-खेदयोरि"ति कपिलः । तथा च एवं महत्-संबन्धिनो देवदेव-शिरोरत्नस्य तव मादृश-जंतु-विषयीकरणं न महिमापादकमिति भावः ।।१३।।

"चतुर्दिक् दिग्-चतुष्टय" इति केदारः ।

चन्द्रस्य कान्तावुत्तरोत्तरं नैबिड्यं निरूपयति । तन्त्रेण मणि-मंत्रौषध-यन्त्रादिषु येन केनापि प्रकारेण द्रावितानि द्रवीकृतानि यानि कैतक-गर्भ-पर्णानि तेषां स्रोतसः प्रवाहस्य शोभां बिभ्रती दधाना येयं यासौ छविः कान्तिः । द्राक् सपदि । विधेः प्रकारस्य । योग्या उचिता अभवत् । सा कान्तिः कलशीभिः कलशैः । "कलशस्तु त्रिष्वि"त्यमरः । उत्सेक्या उत्सेचनं कर्तुं योग्या । अंजलय एव पुटानि द्रोणाः । "द्रोणे" इति महाराष्ट्राः । मृणालानां बिसानाम् अंकुरैः । "अंकुरोऽभिनवोद्भिदी"त्यमरः[8] । पातुं योग्या पातव्या च चन्द्रिका सती । अमुग्धश्चतुरः विभवः दर्शनीय-रूपं भाग्यं यस्य । शशिनि वर्तते । तथा च "तिमिरस्य तथा मुष्टि-ग्राह्यत्वं सूचि-भेद्यते"ति तमस्यभिहितो नैबिड्य-सूचको न्यायः कविना चन्द्रिकायां भंग्यंतरेणोक्त इति बोध्यम् ॥१४॥

प्रा० प्र०—तत्स्थाण्विति सन्धि-सङ्कटं "प्रावृड्वासरे"त्यादिवत् समाधेयम् । हंहो इत्याश्चर्य-खेदयोः ॥१३॥

1. V. r. नु सिञ्चसि । 2. V. r. रोचिषः । 3. V. r. अपि च ।
4. V. r. यन्त्र 5. V. r. यं या ; यं यं ।
6. V. r. प्रागभूत् । 7. V. r. उत्सेच्या । 8. II, 4, 4. p. 53.

(विभाव्य) वैमल्यमेव[1] वा शश-लक्ष्मणो मादृश-जने[2] प्राण-सन्देह-हेतुः। वैषम्यमेव[3] वा विषं[4] विषयस्य[5]।

(चतुर्दिशमवलोक्य[6] साभ्यनम्)

अयि पिबत चकोराः कृत्स्नमुन्नम्य[7] कण्ठान्[8]
क्रम-कवलन-चञ्चच्चञ्चवश्चन्द्रिकाम्भः।
विरह-विधुरितानां[9] जीवित-त्राण-हेतो-
र्भवति हरिण-लक्ष्मा येन तेजोदरिद्रः[10] ॥१५॥

च० त०—शश-लक्ष्मणश्चन्द्रस्य। "शुभ्रत्वं शश-पुष्पाणां सामान्योक्ताव्"िति कवि-समयात् वैमल्यं नैसर्गिकमिति व्यज्यते। सन्देहेति। वैमल्यस्य पूर्ण-गमकतया भृशमुद्दीपकत्वादिति भावः। विषयस्य शृंगारादेः। वैषम्यं परिणति-विषमत्वमेव विषमिव दुःसहमित्यर्थः।

अभ्यर्थनं प्रार्थना।

अयीति। अयि हे चकोराः। कृत्स्नम् अशेषं यथा तथा। अंभसो विशेषणं च। कण्ठानुन्नम्य उन्नतीकृत्य। क्रम-कवलनैः एकैक-पर्याय-ग्रासैः। चंचंती ललंती चंचूस्त्रोटिर्येषां तथा सन्तश्चन्द्रिकांभः कौमुदी-प्रायं जलं पिबत। ननु तेन किं फलमित्यत आह विरहेति। येन पानेन विरहैः वियोगैः विधुरितानां व्याकुलितानां संजात-व्याकुल-गुणानाम्। जीव-संरक्षण-हेतोः। हरिण-लक्ष्मा

प्रा० प्र०—विधुरिता व्याकुलिताः ॥१५॥

---

1. V. r. वैमत्यमेव ; अयमेव। 2. V. r. मादृग्जने।
3. V. r. वैशद्यमेव। 4. V. r. विषमं। 5. V. r. विषस्य।
6. V. r. चतुर्दिशमवलोक्य omitted. 7. V. r. नित्यमुन्नाम्य।
8. V. r. कण्ठं। 9. V. r. विवरितानां।
10. Same as BālR. 5. 75 ; only l. 2 slightly different.

( पुरोऽवलोक्य ) सैवेयं मृगाङ्कावली ।

विदूषकः । भो मिअंकावली[1]ज्जेव एसा । णहु एक्क[2]चन्दस्स एत्तिअमेत्तो[3] कंति-वित्थारो ।

राजा । ततः कदली-लतान्तरितावेव शृणुवस्तावदस्या विश्रम्भ-जल्पितानि । आतृप्ति पिबेतां श्रवसी रसायनम् ।

( तथा कुरुतः ) ।

( ततः प्रविशति यथा निर्दिष्टा[4] मृगाङ्कावली विचक्षणा च । )

च० त०—मृगांकः । "मृगांकः कलानिधिरि"त्यमरोक्तेः [ यद्यपि ] हरिण-लक्ष्मेति पर्याय-पद-द्वय कथनं क्लिष्टमेव, तथापि "अर्धं दानव-वैरिणे"त्यादिवद्दयनीयम् । "कौमोदकी-लक्ष्मण"[5] इति वदन् मुरारिस्तु न युक्तं चमच्चकार, कोश-स्पर्शेन कवि-समय-लंघनादित्या-लंकारिकाः । तेजसा दरिद्रः रिक्तः भवति जायते । तथा च युष्मतकृत-पानेन चन्द्र-तेजसो न्यूनत्वे विरहिणो जीविष्यंतीति भावः ॥१५॥

सैव पूर्व-दृष्टैवेयं मृगाङ्कावली नायिकेत्यर्थः ।

अथ प्रसिद्ध-चन्द्र-व्याजेन नायिकां स्तौति भो इति । एषा नायिका मृगांकाणां मुख-चन्द्राणाम् आवली पंक्तिर्यस्यामेवम्, चित्र-दोला-सालभंजिकादौ विविध-मुखाकारतया दर्शनादिति भावः । चन्द्रस्य मुख-रूपस्य प्रसिद्धस्येति चोद्यम् ।

अन्तरितावाच्छादितौ । विश्रंभेण विश्वासेन । आतृप्ति तृप्ति-पर्यन्तम् । श्रवसी कर्णौ । "द्रव-रूपौषधं दिव्यं सर्व-काम्यं रसायनमि"त्यगस्त्यः । पिबेतामिति...द्विवचनो धातुः ।

यथा निर्दिष्टेत्युत्तर-वाक्यं, सर्वत्रैवमूह्यम् ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भो मृगाङ्कावल्येवैषा । न खल्वेकस्य चन्द्रस्य एतावन्मात्रः कान्ति-विस्तारः ।

---

1. V. r. वलि ।
2. V. r. एक ।
3. V. r. एत्तिओ ।
4. V. r. no यथा निर्दिष्टा ।
5. AnargharR., I. 1.

मृगाङ्कावली । (अनुध्यान-नाटितकेन तदेव "चन्द्रं चन्दन-कर्दमेन लिखितमि"त्यादि[1] पठति । )

राजा । ( सखेदम् ) अहो मदन-मन्त्राक्षराणि सुभाषित-वचनान्यस्याः ।

विदूषकः । अहं उण जाणे णिसिदाओ मअण-हत्थ-भल्लीओ[2] ।

राजा । कण्ठे मौक्तिक-मालिकाः स्तन-तटे कार्पूरमच्छं रजः
सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणाली-लताः ।

च० त०—अनुध्यानस्य स्मरणस्य नाटितकेन नटनाभिनयेन । इत्यादीति, द्वितीयाङ्क-पूर्तौ विचक्षणया विरच्य श्रावितं श्लोक-द्वयमित्यर्थः । पठतीति स्वावस्था-निवेदन-मनोहर-तया स्वयं तदेव पद्य-युगलमनुवदतीति यावत् ।

मदन-मंत्रमयाण्यक्षराणि येषां येषु वा । वैदिक-मंत्रेषु नैवं स्वारस्यमिति भावः । सुभाषित-वचनानीति भ्रान्त-पाठः । "भाषितं वचनमि"ति नामलिङ्गानुशासनेन[3] पुन-रुक्तेः । सुवचनानीति वा पाठः ।

भल्लीवत् परवशीकुर्वन्तीति भावः । "स्त्री-नपुंसकयोर्भल्लमि"ति केशवः[4] । तथा च सीता-भल्लकभल्ले"ति भगवान् बोधायनः । "नलीचे-नीर" इति महाराष्ट्राः ।

शीतोपचार-युक्तां तां वर्णयति—कण्ठ इति । कर्पूर-संबन्धि कार्पूरं, रजो धूलिः । अङ्गके अवयव इति जातावेकवचनम् । पाणावेकस्मिन् करे । मृणाली-रूपा लताः । वलयिताः वलयीकृताः ; मृणालीति कवेः प्रमादः, "अस्त्रियां मृणालमि"त्यमरसिंहाभि-

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अहं पुनर्जाने निशिता मदन-हस्त-भल्ल्यः । [ भल्ल्यः ] वितस्ति-परिमिता बाण-विशेषाः ।

---

1. V. r. चन्द्रं चन्दन-कर्दमेन लिखितमित्यादि drops.
2. V. r. हत्थत्थ-भल्लिआओ ; णिसिदाणि हद-मदणस्स हत्थ-भल्लाणि ।
3. AK. I, 5, 1, p. 27.
4. ch. Keśava's KDK., v. 271. p. 119.

तन्वी नक्तमियं चकास्ति शुचिनी[1] चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः[2] ॥१६॥

विदूषकः । भो सच्चं[3] चंदाधिदेवतेव्व[4] सा[5] गलिदा । जदो लंछण-छलेण मअ-लंछणस्स[6] इमाए[7] अइर-परिच्चत्त[8]-मिणाल-दल-मलिणं व[9] मंडल-मज्झं निज्झाअदि[10] ।

राजा । सखे ! मांसलेऽपि[11] चन्द्रिका-द्योते[12] व्यतिरिच्यत एवास्याः[13] स्मर-जन्मा पाण्डिमा । विभाव्यत एव वा शङ्ख-शुक्ति-युक्ताऽपि मुक्तावली । तथाहि—

च० न०—धानान् । शुचिनी शुभ्रे, चीनांशुके चीनो देश-विशेषः तत्रत्ये अंशुके वा । बिभ्रती दधती । इयं तन्वी । नक्तं रात्रौ । व्योम्नः अग्रं प्रांतम् आरोहतः शीतांशोरिति पंचमी षष्ठी च । गलिता च्युता अधिदेवतेव चकास्ति । एतेन शुक्लाभिसारिका सूचिता भवति ॥१६॥

परित्यक्तं यन्मृणालम् । अन्यं करे वलयितमिति भावः । अत एव पूर्वं पाणाविल्येक-वचनमुक्तम् । मण्डल-मध्यं, मृग-लांछनस्येत्यनुषङ्गः । "निध्यानं दर्शने"त्यमरः । तथा चेयं निष्कलंक-मुखीति भावः ।

प्रा० प्र०—चीनेति चीन-रूपे अंशुके "चीनं शीत-मृदु-क्षौम" इति जयः ॥१६॥

[ संस्कृतच्छाया—विदूषकः ] भोः सत्यं चन्द्राधिदेवतेव सा गलिता । यतो लाञ्छन-च्छलेन मृगलाञ्छनस्य अनया अचिर-परित्यक्त-मृणाल-दल-मलिनमिव मण्डल-मध्यं निध्यायते । विलोक्यत इत्यर्थः ।

---

1. V. r. तनुनी ।
2. Repeated in PraP. I. 27.
3. V. r. सच्चकं ज्जेव्व ।
4. V. r. चन्दाधिदेवता ज्जेव्व
5. V. r. एषा ।
6. V. r. मिअ-लंछनस्स ।
7. V. r. इमीअ ; इअमिअं
8. V. r. अइर-परिवत्तं ।
9. V. r. मिणाल-मलिणं विअ ।
10. V. r. निज्झाआदि ; निज्झाअदी ; दीसदि ।
11. V. r. मांसलतां दधत्यपि
12. V. r. चन्द्रिकोद्द्योते
13. V. r. इवास्याः ।

नख[1]-दलित-हरिद्रा-ग्रन्थि-गौरे शरीरे
स्फुरति विरह-जन्मा कोऽप्ययं पाण्डु-भावः ।
बलवति सति यस्मिन् सार्धमावर्त्य हेम्ना
रजतमिव कृशाङ्ग्याः[2] कल्पितान्यङ्गकानि ॥१७॥

विदूषकः । पारअ-रस-चुंबिअं विअ सुवण्णं से लावण्णं । कम-कंत[3]-गोरत्तणेण आकिट्टं विअ अंगं[4] आपंडु[5]-भावेण ।

मृगाङ्कावली । हंहो हिअअ, णअणेहिं दिट्ठो सो[6], तुमं

च० त०—मांसले पुष्टेऽपि । व्यतिरिच्यते विशेषाधिको भवतीत्यर्थः । विभाव्यते ज्ञायते इति यावत् । शंख-शुक्तीति, यथाकथंचित् किंचित् पीत-वर्णेति भावः ।

तदनुगुणं वर्णयति नखेति । नखेन दलितो निस्तुषीकृतो यो हरिद्राया ग्रन्थिः "गाभाद्रे"ति महाराष्ट्राः । तद्वत् गौरे पीते । "गौराङ्गीति" मुरारिः । पांडुरिति ध्वनिः । यस्मिन् पांडु-भावे पांडिम्नि बलवति प्रबले सति पीत-वर्णेन मिश्रे सति इति यावत् । हेम्ना सार्धं सह, रजतम् आवर्त्य निक्षिप्य, कृशाङ्ग्याः अंगकानि अवयवाः, कल्पितानि विरचिता इवेत्यर्थः । तथा च प्रकृत्या पीत-वर्णमस्या वपुर्विरह-पांडिम्ना मिलितं सद्रजत-मिश्र-कांचनमिव शोभत इति भावः ॥१७॥

क्रमेण पर्यायेण कान्तं रम्यं गौरत्वं पीतत्वं यस्मिन् । आपांडु-भावेन पांडिम्ना । "अंगं काय-प्रतीकयोरि"ति सारस्वतः । आकृष्टमाक्रांतमिव । रराजेत्यर्थः ।

प्रा० प्र०—[ संस्कृतच्छाया विदूषकः ] पारद-रस-चुम्बितमिव सुवर्णमस्या लावण्यम् । क्रम-कान्त-गौरत्वेन आकृष्टमिवाङ्गमापाण्डु-भावेन ।

[ संस्कृतच्छाया—मृगाङ्कावली ] हंहो हृदय, नयनाभ्यां दृष्टः सः, त्वम्

---

1. V. r. दर । 2. V. r. मृगाक्ष्याः । 3. V. r. क्रम क्रांत ।
4. V. r. परिवग्गिदं ; ओअग्गिअं । 5. V. r. पण्डु । 6. V. r. no सो ।

उत्तम्मसि त्ति अच्चरिअं[1] । [2]मूले वउल-लट्ठीए[3] सुरा-गंडूस-सेओ कुसुमेसु मइरा-गंधुग्गारेत्ति[4] ।

विदूषकः । किं वा कारणम् ?

राजा । ( सकरुणम् ) इदं हि कारणं, बलवाननङ्गोऽस्याम्[5] । इयं हि[6] स्वेन हृदयेन[7] कलहायते ।

मृगाङ्कावली । अइ कप्पूर-सलाआ-सिसिर[8] विज्जाहरमल्ल !

च० न०—येन नयन-द्वयेन स दृष्टस्तदेवोत्ताम्यतु वृथा किं त्वमुत्ताम्यसि इत्याश्चर्यम् । नायं त्वया दृष्ट इति भावः । निष्कारणं वैपरीत्येन फल-प्राप्तौ दृष्टांतमाह—मूल इति । उद्गार उदय इत्याश्चर्यमित्यस्यानुषङ्गः । यत्र सेकस्तत्र मूले गन्धेन भाव्यं, मूलं विहाय कुसुमेषु गन्ध इव प्रकृते नयनयोस्तूष्णीकयोः सतोरपि हृदय त्वमुत्ताम्यसीत्याश्चर्यमूह्यम् । "अच्चरिअमि"ति कालिदास-श्रीहर्षादीनामिव कवेः प्रमादः । "तूर्य-धैर्य-सौन्दर्याश्चर्य-पर्यन्तेषु र"[9] इति सूत्रेण अच्चेरमित्यस्यैव सामीचीन्यात् ।

स्वेन स्वकीयेन ।

कर्पूर-शलाकादि-निर्माणं महाराष्ट्रेषु प्रसिद्धम् । "शलाकाला" इति "शलाख" इति च महाराष्ट्राः । "तपति तापयती"ति माठरः । अत एव "तपति तनु-गात्री"ति

प्रा० प्र०—उत्ताम्यसीत्याश्चर्यम् । अच्चेरमिति पाठः साधुः । मूले वकुल-यष्ट्याः सुरा-गण्डूष-सेकः, कुसुमेषु मदिरा-गन्धोद्गार इति ।

[ संस्कृतच्छाया—विदूषकः ] किं वा कारणम् ।

[ संस्कृतच्छाया—मृगाङ्कावली ] अयि, कर्पूर-शलाका-शीतल विद्याधर-मल्ल,

---

1. V. r. अच्चरिअं अच्चरिअं ; अहो अच्चरिअं । 2. Add. r. अहवा ।
3. V. r. वलल्यट्ठीए ; पविट्ठो केहरसस । 4. V. r. गंधुग्गारीत्ति ।
5. V. r. कारणम् रत-सरागं हृदयमस्याः ; कारणान्तर-सरागं हृदयमस्याः ।
6. Add. r. अतः इयं ; no इयं हि । 7. Add. r. सह ।
8. V. r. सम्मच्छाआ-सिसिर । 9. PPr. 3. 18, p. 66

तुमं पि तपसि[1] ? कहिं मे[2] णिव्वुदि[3] । जइ[4] चन्द-मणी हुअवहं णीसंदअदि[5] को एत्थ[6] पडीआरो ।

राजा । नमो मह्यं मृगाङ्कावली-चतुरोपालम्भ-पात्रीकृताय ।

मृगाङ्कावली । सहि ! सामण्ण-कुसुम-वाणो भविअ मअणो[7] एआरिसं[8] करेदि[9] ? ता बहू से[10] विसेस-कुसुम-मआ[11] वाणा ।

राजा । सलिलमय्यपि[12] दहति हिमानी । कुसुममय्यपि स्वभाव-वामा[13] मदन-हस्त[14]-पञ्च-शरी ।

च० न०—नाथचरण-व्याख्यात-शाकुन्तले । निर्वृतिः सुखम् । निष्यन्दयते यदि द्रवीभवति चेत् । "प्रतीकारः प्रतिक्रिये"ति हलायुधः ।

मृगांकावल्याश्चतुरोपालंभस्य पात्रीकृताय नम इति । तादृश-पुण्य-शीलत्वादिति भावः ।

सामान्येन केवल-दृश्य-नाटकादि-वेषाभिनय-साधारण्येनेति भावः । एतादृशं कर्म बाधा-भरमिति यावत् । विशेषा ईदृश-बाधातिशयकारिणश्च ते ।

सलिलमयी जल-प्राया । "हिमानी हिम-संहति"रित्यमरः । स्वभावेन निसर्गेण । "मनोज्ञ-वक्रयोर्वाम"मिति विश्वः । पंचानां शराणां समाहारः पंच-शरी । हस्तेति पदं सदा सन्नद्धत्व-सूचकम् ।

प्रा० प्र०—त्वमपि तपसि ? क्व मे निर्वृतिः ? यदि चन्द्र-मणिर्हुतवहं निष्यन्दयते, कोऽत्र प्रतीकारः ?

[ संस्कृतच्छाया—मृगाङ्कावली ] सखि, सामान्य-कुसुम-वाणो भूत्वा मदनः कथमेतादृशं करोति ? कर्मेति शेषः । तस्माद्बहवोऽस्य विशेष-कुसुममया वाणाः ।

हिमानी हिम-संहतिः ।

---

1. V. r. तवसित्ति । 2. V. r. कधं मे । 3. V. r. कधं मं डज्झसि ।
4. V. r. no जइ । 5. V. r. नीसंददित्ति ।
6. V. r. को वा । 7. V. r. no मअणो ।
8. V. r. एआरिस-दसं । 9. Add. r. मअणो ।
10. V. r. एणं से ; बहू णं से । 11. V. r. विष-कुसुममआ ।
12. V. r. सलिल-रूपापि ; सलिल-रूपा । 13. V. r. चण्डा । 14. V.r. no हस्त ।

विदूषकः । भो पिअ-वअस्स, वरिसा-रत्ति[1]-सक्कर-पुत्तलिआ व्विअ[2] ख्वणे ख्वणे ओज्झरन्ती[3] कं ण दुमेदि[4], किं उण मिलाण-मरुवक-कंदलीव[5] सुअंधा विरह-परिक्खामा वि इयं रमणिज्जा । किंअ[6] कोरण्ड-कुसुम-माला[7] मिलाअमाणा[8] सुट्ठु क्खु रत्तत्तणं दंसेदि ।

मृगाङ्कावली । [9]किं करेदि[10] सहि[11] ! दुब्भेज्जा[12] प्पेम-

च० न०—शर्करा-प्रतिमाया वर्ण-कालापचय-मर्म महाराष्ट्रा जानंति । "पुतलि" "अपात" इति महाराष्ट्राः । ख्वणे ख्वणे इति कालिदासादीनामिव कवेः प्रमादः । छणे छणे इति सुशब्दः । अक्ष्यादि-गणे क्षणस्यापि पठितत्वात् । किं पुनः किं त्वित्यर्थः । मरुवकाणां "दमने स्यान्मरुवकः पिण्डोतक" इति धनंजयः । "दवणा" इति महाराष्ट्राः । "कन्दली कन्द-संघयोरि"ति "इष्ट-गन्धः सुगन्धिरि"ति यादवामरौ । परितः सर्वावयवेषु क्षामा कृशा । मालेव स्रगिव । 'मिलाअमाणे'त्येतत् "हसमाणा हसन्ती च हसमाणेति दिगि"ति प्राकृत-चंद्रिकायां शालिवाहनोक्तेः साधीयः । अत एव "मिलाअमाणाइं सरोरुहाइं" इति विक्रम-विजये सायणः । रक्तत्वम् आरुण्यम्, प्रकृते अनुरागम् ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भोः, प्रिय-वयस्य, वर्षा-रात्रि-शर्करा-प्रतिमेव क्षणे क्षणे अपचीयमाना कं न दुनोति । ओज्झरन्तीति शब्दो देशीयः । दुमे इत्यत्र दुनो दुमादेशः । किं पुनर्म्लान-मरुवक-कन्दलीव सुगन्धिः विरह-परिक्षामाऽपीयं रमणीया । पिण्डोतको मरुवक इत्यमरः । किञ्च, कोरण्ड-कुसुम-माला म्लायन्ती सुष्ठु खलु रक्तत्वं दर्शयति । "कोरण्डः पाटला-कुसुम" इति धन्वन्तरि-कोशः ।

[ संस्कृतच्छाया—मृगाङ्कावली ] किं करोमि सखि, दुर्भेद्या प्रेम-दुर्दोली । कोङ्कण-

---

1. V. r. वासारिदु ; विआरेदु ; वस्सरिदु ।
2. V. r. व्व ।
3. Add. r. एसा ; v. r. भिज्जन्ती ।
4. V. r. दुःखेदि ; दुम्मेदि ।
5. V. r. मिलाणा वि मरुवक-कन्दली ।
6. V. r. किं च ;
7. V. r. कोरंट-कुसुम-मालाव्व ।
8. V. r. माणावि ।
9. Add. r. सहि, अहवा ।
10. V. r. करीअदु ।
11. V. r. no सहि ।
12. V. r. दुच्छेज्जा ।

दुद्दोली[1] । (सखेदम्) सहि ! णिरणुक्कोसो क्खु सो, विरलो व्व[2] पर-दुक्ख-दुक्खिदो जणो, त्थोआ व्व पंचम-हुंकारुम्मुक्क[3]-कुसु-मुप्पीड-विडविणो[4] । (सप्रश्रयम्) अइ तिहुअणेक्क-धाणुक्क वम्मह[5] ! मिअंक-चूडामणि-परिक्खिद[6]-तिक्खत्तणेहिं सरेहिं महिला-अणं पहरन्तो[7] ण लज्जसि ? जाणामि जदि[8] तस्सिं पि अणे एव्वं एव्व[9] आरभडी-पचंडो[10] होसि ।

च० त०—प्रेम्णा दुद्दोली । निरिति, प्रकृत्या निर्गताम् अनुक्रोशः यस्मिन । सांप्रतं निर्गतः अनुक्रोशः यस्मादित्याशयः । विरलो वा स्वल्प एव, परस्यान्यस्य दुःखे सति दुःखितः । पंचमाश्च ते हुंकाराः कोकिल-ध्वनयः तैः साधनैः उत् उच्चैः मुक्तास्त्यक्ताः प्रका-शिता इति यावत् कुसुमान्येव उत्पीडा येस्ते । विटपिनो वृक्षा आम्रादयः । स्तोका वा केचिदेवेत्यर्थः । "स्तोकाल्पे"ति, "व्यवच्छेदे विकल्पे वे"त्यमरार्जुनौ । सप्रश्रयं स-विनयम् । "धन्वी धानुष्क" इत्यमरः । "मन्मथे व"[11] इति वत्वम् । महिला स्त्री सैव जनो लोकः तम् । जानामि त्रिभुवनैक-धानुष्क इतीति शेषः । तस्मिन राज्ञि । "आरभट्यारभटी चाटु-हासादावि"ति मुकुटः । तथा "प्रचण्डो दुःसह" इति नन्दी ।

प्रा० प्र०—देशस्था अतिशयार्थे दुद्दोलि-शब्दं व्यवहरन्ति । सखि, निरनुक्रोशः खलु सः, विरलो वा पर-दुःख-दुःखितो जनः, स्तोका वा पञ्चम-हुङ्कारोन्मुक्त-कुसुमोत्पीड-विटपिनः । पञ्चम-हुङ्कारः कोकिल-ध्वनिः । "पिकः कूजति पञ्चममि"ति श्रीनाथः । "उत्पीडः शेखरे पुंसी"ति हेमचन्द्रः । अयि, त्रिभुवनैक-धानुष्क, मन्मथ, मृगाङ्क-चूडामणि-परिक्षित-तीक्ष्णत्वैः शरैर्महिला-जनं प्रहरन्न लज्जसे । जानामि यदि तस्मिन्नपि जन एवमेवारभटी-प्रचण्डो भवसि ।

---

1. V. r. पेम्म-दुद्दोणी ।　　2. V. r. व्व ।
3. V. r. णव पंचम-झंकारामुक्क ।　　4. V. r. ण भ्रमरामुत्तकुसुमुप्पीड-विडम्बिणो ।
5. V. r. मम्मह ।　　6. V. r. परिक्खित्त ।
7. V. r. विणिहंतो ; विग्गहन्तो ।　　8. V. r. जत् ।
9. V. r. इमेव्व ।　　10. V. r. चण्डो ।　　11. PPr. 2. 40, p. 99.

राजा। सुतनु, सुतरामारभटी-प्रपञ्चः[1]।

विदूषकः। ( उच्चैर्हसित्वा[2] ) अणंगस्स आरभडित्ति[3] महाहासकरं[4] मे।

राजा। किमिदं यदुच्चैर्हससि, नैवं त्रासय[5]।

मृगाङ्कावली। विअक्खणे! जण-सञ्चारो विअ[6]। ता कदली-थंभन्तरिदे[7] भविअ[8] जाणीमो किं[9] एदं त्ति। (तथा कुरुतः)।

विदूषकः। एहि पविसह्म ( इति परिक्रामितकेन )।

राजा। ( शिशिरोपचार-सामग्रीमालोक्य नाट्येनादाय च )

मृणालमेतद्वलयीकृतं तया
तदीय एकोऽप्यवतंस[10]-पल्लवः।

च० त०—"जन-सञ्चार" इत्यादि प्रस्तावायाह उच्चैरिति। साङ्कस्येवेति भावः।

थंभेति। कालिदासादीनामिव कवेः प्रमादः। खंभेति साधुः। "स्तंभे ख" इति वररुचिनाऽभिधानात्। अत एव खांब इति महाराष्ट्राः।

"परिक्रमाभिनयनं परिक्रामितकं मतमि"ति नाट्य-पद्धतिः। 'परिक्रमः' संचारः।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अनङ्गस्यारभटीति महाहासकरं मे।

[ संस्कृतच्छाया—मृगाङ्कावली ] विचक्षणे, जन-सञ्चार इव, तस्मात् कदली-स्तम्भान्तरिते भूत्वा ज्ञास्यावः किमेतदिति।

[ संस्कृतच्छाया—विदूषकः ] एहि प्रविशावः।

---

1. V. r. आरभटीचण्डः ; चारभटी-चण्डः।
2. V. r. no उच्चैर्हसित्वा।
3. V. r. वि आरभडित्ति ; आरभडीओत्ति।
4. V. r. महाहासो।
5. V. r. किमिदमुच्चैर्हसितेन त्रासयसीमाम्।
6. Add. r. विचक्खणा।
7. V. r. थंभन्तरिदा, गुम्मन्तरिदे।
8. V. r. no भविअ।
9. V. r. किं णु।
10. V. r. एवैष वसन्त।

इदं च तस्याः कदली-दलांशुकं
यदत्र[1] संक्रान्त इव स्मर-ज्वरः ॥१८॥

तदनया तदुपभुक्त-मुक्तया[2] शीत-वर्ग[3]-सामग्र्यात्मानं निर्वापयामि। ( तथा करोत्युपविशति च[4] । विदूषकोऽपि यथोचितमुपविशति[5] ) ।

राजा । (संतापमभिनीय) अहह[6] अपर्यालोचितमाचरितम्। यतः—

शीतांशुर्विष-सोदरः फणभृतां लालास्पदं[7] चन्दनं
हारः क्षार-पयोभवः[8] प्रिय-सुहृत् पङ्केरुहं भास्वतः ।
इत्येषां किमिवास्तु वस्तु मदन-ज्योतिर्विघाताय[9] यद्-
बाह्याकार-परिग्रहेण[10] तु वयं तत्त्व-त्यजो वञ्चिताः ॥१९॥

च० न०—मृणालमिति । दलान्येवांशुकम् । यत यस्मात् । अत्रांशुके । अंशुकं शुष्कमुष्णं च वर्तते इति भावः ॥१८॥

तत् तस्मात् । तया मृगांकावल्या । उपभुक्ता चासौ मुक्ता । निर्वापयामि सुखयामि । "अहहेत्यद्भुते खेदे" इत्यमरः[11] । आचरितं कृत्यमिति शेषः ।

तदेवोपपादयति यत इति । यतः यस्मात् कारणात् । "स्यन्दिनी लाले"त्यमरः[12] । "लाल" इति महाराष्ट्राः । तासाम् आस्पदं स्थानम् । हारो मुक्तावली । क्षारं पयो यस्य तस्मिन् लवणाब्धौ भवतीति । भास्वतः सहस्रांशोः । प्रिय-सुहृत् प्राण-मित्रम् । इति उक्त-

1. V. r. सपत्र । 2. V. r. परित्यक्तया । 3. V. r. no वर्ग ।
4. V. r. no उपविशति च । 5. V. r. यथोक्तमुपचरति । 6. V. r. अथवा ।
7. V. r. लीला-पदं । 8. V. r. हाराः क्षार पयोभुवः ।
9. V. r. ज्वाला-विघाताय । 10. V. r. परिभ्रमेण ।
11. AK. III, 3, 258, p. 227. 12. II, 6, 67, p. 152.

विचक्षणा । सहि मिअंकावलि ! फलिदं मे दूइत्तणेण । जं[1] महाराओ वि एआरिसं अवत्थन्तरं उव्वहदि ।

राजा । ( सन्तापमभिनीय )

व्यजन-मरुतः श्वास-श्रेणीमिमामुपचिन्वते
मलयज-रजो[2]धारा बाष्पं प्रपञ्चयितुं प्रभुः[3] ।

च० त०—प्रकारेण एषां शीतांशु-प्रमुखाणां मध्ये किमिव किं वा वस्तु । स्मर-संताप-वारणाय, "ज्योतिः सन्ताप-तेजसोरि"ति कपिलः । अस्तु । विष-लाला-क्षारांबु-तपन-संबन्धादेकमपि वस्तु न ममाऽऽनुकूल्याय, प्रत्युत शीतांशु-प्रभृतीनि चत्वार्यपि वस्तूनि प्रातिकूल्यायैवेति भावः । ननु कथं तद्वस्तु प्रतिकूलमित्यपेक्षायामाह यदिति । यस्य वस्तुनः शीतांशोर्लीलायाः हारस्य पङ्केरुहस्य च बाह्यः कुटिलान्तःकरणाद्भिन्नो य आकारः साधु-रूपं तस्य परिग्रहेण आदानेन । तत्त्वं बाधकतम-विष-लाला-क्षारांबु-तपन-संबन्ध-परिज्ञानाभाव-रूप-तत्त्वं त्यजंतीति तत्त्वत्यजः वयं तु वञ्चिताः । तदिदं "वयं तत्त्वान्वेषादि"त्यादि[4] शाकुन्तलच्छायानुसरणमिति बोध्यम् । "विंशद् विंशतिरि"ति द्वि-रूपः ॥२६॥

अन्तरं भेदे । उत् उत्कर्षे, उच्चैर्वा । "वहती"ति च पाठः ।

तापस्य शान्त्यै क्रियमाणोऽप्युपचार एव संकट-भराय भवतीत्याह—व्यजनेति । मरुतः पवनाः । उपचिन्वते वर्धयन्ति, व्यजनानिल-संसर्गेण श्वासानिला वर्धन्त इति भावः । मलयज-रजसां महाराष्ट्र-प्रसिद्ध-चन्दन-चूर्णानां धारा द्रवासारः । प्रपंचयितु

प्रा० प्र०—वयमिति । अहमित्येक-वचने प्रयोज्येऽपि क्वचिन्निर्वेदादिषु वयमिति बहुवचन-प्रयोगः कवीनां सम्प्रदायः । अत एव "वयं तत्त्वान्वेषादि"ति शाकुन्तले ; धिङ् मर्त्येन जिता वयं हहह नो विंशद्भुजीयं वृथे"ति द्रविड-काव्ये प्रयोगः ॥२१॥

[ संस्कृतच्छाया—विचक्षणा ] सखि मृगाङ्कावलि, फलितं मे दूतीत्वेन यन्महाराजोऽपि एतादृशमवस्थान्तरमुद्वहति ।

---

1. V. r. no जं ।
2. V. r. रसो ।
3. V. r. विभुः ।
4. AS., I. 23.

कुसुम-शयनं कामास्त्राणां करोति सहायनां
द्विगुण-गरिमा मारोन्माथः[1] कथं नु विरंस्यति ॥२०॥

विदूषकः । अए[2], मुद्दा-सणाहो लेहो विअ ।

राजा । न केवलं लेखः, स्मर-सन्धि-विग्रह[3]-सम्बन्धश्च । तथा हि पश्य—

तालीदलं यदकठोरतरं यदत्र
मुद्रा स्तनाङ्क-घन-चन्दन-पङ्क-मूर्तिः ।
यद्बन्धनं बिस-लता-तनु-तन्तुभिश्च[4]
कस्याश्चिदेष गलितस्तदनङ्ग-लेखः ॥२१॥

च० त०—विस्तारयितुम् । प्रभुः समर्थः । चन्दन-रसस्तां विनैवं परिणत इति वाष्प-परंपरा गलंतीति भावः । "स्त्री-पुंसयोः समा लब्वादय" इति समय-पद्धतेः 'धारा प्रभुरि'-त्युक्तम् । सहायनां साहाय्यं, कामास्त्राणां पुष्पमयत्वादिति भावः । अत एव द्विगुणो गरिमा आधिक्यं यस्य सः । मारान् स्मरान् । उन्माथस्ताडनम् । कथं वा । "कदा न्वि"ति च पाठः । विरंस्यति विराममवसानं प्राप्स्यतीत्यर्थः । तथा च कामस्यैवमस्त्रानन्तत्वे कल्प-शतैरप्युन्माथस्यावसानमेव नास्तीति भावः ॥२०॥

मुद्रया सनाथो युक्तः ।

स्मरे स्मर-विषये । संधि-विग्रहौ पूर्वं व्याख्यातौ । तयोः संबन्धः समाचार-योगः ।

तालीति । यद् यस्मात् । अकठोरतरं कोमलम् । "पूवाले" इति द्राविडाः । अत्र ताली-दले । मुद्रा रहस्यार्थतयेति भावः । "जत्वाद्यंकेषु(?) पत्रादौ राजाज्ञायां च मुद्रिके"ति संसारावर्तः । स्तनयोरंकः चिह्नं चासौ शीतोपचार-कृत-जतु-स्थानापन्न-सान्द्र-चन्दनस्य

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अये, मुद्रा-सनाथो लेख इव ।

---

1. V. r. कामोन्माथः ।　　2. V. r. अहो ।　　3. V. r. स्मर-सम्बन्धि ।
4. V. r. तनु-तन्तुना च ; तनु-तान्तवं च ।

विदूषकः । ता एव्वं[1] एसो, सण्णिहिद[2]-परिच्चाए कारणं[3] भणिदव्वं ।

राजा । ( विदूषकं कण्ठेऽवधार्य[4] ) विदूर-वसुधैव रत्न-शलाका-भूः[5] भवद्वचोवृत्तिरेव रस-निष्यन्द-भूमिः । तदुपरि नाम दर्शय ।

विदूषकः । ( तथा करोति ) ।

राजा । ( वाचयति ) निष्कृपस्य[6], वराक्याः ।

च० त०—पंकः तस्मिन् मूर्तिः अंगुलीयक-रेखिनेष्ट-देवता-प्रतिकृतिर्यस्य । "मूर्तिः काय-काठिन्ये च देवता-विग्रहादिष्वि"ति हेमचन्द्रः । बिस-लतायाः तनु-तंतुभिः सूक्ष्म-सूत्रैः । बन्धनं चाशिथिलीभाव-निरासायेति भावः । तन्निपु स्थलेष्वपि वर्तत इति शेषः । तत् तस्मात् । गलितः प्रमाद-पतित इत्यर्थः । विद्याधरमल्लस्य त्रिलिङ्गाधिपतित्वात्ताली-दल-प्रकरणमित्यवगन्तव्यम् ॥२१॥

एष लेखः । एवं यथा भवता निर्दिष्टस्तथैवेत्यर्थः । तथापि किंचिदस्तीत्याह सन्निहिते समीपस्थे तव पुरत इति भावः । परित्यागे लेखस्येत्यर्थात् सिद्धम् ।

अवधार्य धृत्वेति यावत् । स्वाभिप्राय-कथनादिति भावः । विदूरेत्युल्लेखो "विदूर-भूमिरि"त्यादि[7]-कालिदास-कवनानुसारीति बोध्यम् । विदुरेति भ्रान्तः पाठः, "विदूर-दोले"ति कोकिलोक्तेः । भूः स्थानम् । "भूः पृथिव्यामपि स्थान" इति रभसः । वचसो वृत्तिः रीतिः कौशिकीव । रसानां शृंगारादीनां निष्यन्दस्य उद्गारस्य भूमिः नान्येति भावः ।

नितरां कृपा यस्य, निर्दयस्य च । निर्दयस्येति संबन्धे षष्ठी । वराक्याः पत्रमिति शेषः । "वराकी त्वधमे"ति त्रिकाण्डी ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] तस्मादेवमेष, सन्निहित-परित्यागे कारणं भणितव्यम् ।

---

1. V. r. तीए ज्जेव । 2. V. r. सन्निधि । 3. V. r. परिच्चाअ-कारणं ।
4. V. r. कर्णे विधृत्य । 5. Cf. KM. I., 18. p. 33.
6. V. r. निष्कृप । 7. KS., I. 24. p. 13.

विदूषकः । उम्मुदिअ[1] दंसइस्सं । (तथा कृत्वा) भो, अर-अणं रअण-करंडअं, अणक्खरो लेहो ।

राजा । कामं करुण-गम्भीरः प्रयोगः कल्लोलयति[2] मानमम । (विचिन्त्य) अये, ताली-दल-संपुटम्[3] अन्विष्य[4], किञ्चिन्मन्त्र-गुप्तये[5], [6]तत्र शङ्कमानया सूचितं[6] स्यात् ।

विदूषकः । (तथा कृत्वाऽवलोक्य सहर्षम्) अहो दे बुद्धि-विहवो ! किं[7] वण्णणं मिअङ्क-लंछणस्स रोहिणी-वल्लहोत्ति[8] ।

राजा । विसंष्ठुलं[9] वाचयति—

च० त०—उन्मुद्रय उन्मुच्य । करण्डकं "करण्डा" इति महाराष्ट्राः । यथा अरत्नं रत्न-करण्डकं वृथा तथा अनक्षरो लेखो वृथेति भावः ।

निष्कृपस्येत्यर्थमनुसंदधान आह—करुणा दया । कामं पर्याप्तं यथा तथा । कल्लोलयति अतिशयेन तरङ्गयतीत्यर्थः । ताली-दलस्य संपुटं तत्-पत्र-निर्मितां वर्तुलाकारां चन्द्रिकामित्यर्थः । अन्विष्य गवेषय । मन्त्रस्य निज-रहस्यार्थस्य गुप्तये रक्षणाय । तत्र संपुटे, चन्द्रिकायामिति यावत् । किंचित् किमपि, अक्षर-जालमित्याशयः ।

वल्लभत्वं सहज-सिद्धमिति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] उन्मुद्र्य दर्शयिष्यामि । भो भो, अरत्नं रत्न-करण्डकम् ।

[ संस्कृतच्छाया—विदूषकः ] अहो ते बुद्धि-विभवः ! किं वर्णनं मृग-लाञ्छनस्य रोहिणी वल्लभ इति ।

---

1. V. r. उद्घिदिअ । 2. V. r. कन्दलयति । 3. V. r. संपुटां ।
4. V. r. (विमृश्य) सन्धि-बन्धमन्वेषय ; (विमृश्य) तत्-सन्धि-बन्धन वेशाया ।
5. V. r. गुप्तया । 6-6. V. r. काम-तन्त्रमासूचितं ; काम-तन्त्रमासूत्रितं ।
7. V. r. किं वा । 8. V. r. वल्लहस्सत्ति ।
9. V. r. विस्पष्टं ; सविसङ्कुलम् ।

[ विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचन-युगे । ]
यदादत्ते दृश्यादखिलमपि भाव-व्यतिकरम्

( [1]विचिन्त्य ) ।

पाणि-प्रेङ्खणतो विशीर्ण-शिरसः स्वेदांबु-रुग्ण-श्रिय-[2]
स्ता इत्याकृति-लेशतो[3] मनसि नः किञ्चित्प्रतीतिं गताः ।

च० त०—अथ महाराष्ट्र-भाषायां शिखरिणीति मधुर-पदार्थ-विशेषस्याभिधानात् तन्नाम-विशिष्टच्छन्दोविशेष-शिखरिणी-पद्यस्य तृतीयं पादमुदाहरति यदिति । यत् चतुर-कोणेक्षणादि-धुरंधरं लोचन-युगमित्यर्थः । द्रष्टुं योग्यो दृश्यस्तस्मा-न्नायकात् अखिलं कृत्स्नमपि भावानां व्यतिकरम् । "भावः सत्ता-स्वभावाभिप्राय-चेष्टे"ति "व्यतिकरो योग-संवन्धयोरि"त्यमराजुंनौ । आदत्ते गृह्णाति, जानातीति यावत् । तथा च परेंगित-भावावगमन-साधनतया लोचनयोरेव सर्वाति-शायित्वमिति भावः ।

विचिन्त्य विचार्य, अक्षराणीति शेषः ।

पाणीति । पाणेर्दक्षिण-करस्य प्रेंखणतः कंपनात् । विशेषेण शीर्णानि दलितानि शिरांसि ऊर्ध्व-भागा यासाम् । स्वेदांबुभिः घर्म जलैः । रुग्णाः भुग्नाः श्रियः शोभाः चाक-चक्यानि यासां ताः । ताः प्रसिद्धतया दृश्यमाना इति । आकृतेराकारस्य लेशतः एकदेशात् नः अस्माकं हृदि किंचिदीषत् । प्रतीतिं प्रत्ययं विश्वासं गताः प्राप्ताः ।

प्रा० प्र०—विसंष्ठुलं मन्दम् । "विसंष्ठुलं विसंस्थूलं मन्दमित्यर्थ-वाचकं" इति त्रि-रूप-कोशः ।

---

1. Add. r. सवितर्कं । 2. V. r. स्वेदावलुप्त-प्रिय ; स्वेदाम्बु-लुप्त-श्रिय ।
3. V. r. इत्याकृतितो मनाग् ।

वैचित्त्यात्[1] पुनरुक्त-लाञ्छनभृतः कण्ठ्ये न[2] वाच्येन वा[3]
व्याक्षेपं कथयंति पक्ष्मल-दृशो लेखाक्षर-श्रेणयः ॥२२॥

विदूषकः। किं उव्वेल्लदि[4] केलि-कदलीए[5] करि-शुण्डा-दंडावेडो[6] ? ता एहि अणुसरह्म।

राजा। इदमुभयमनन्यगामि, यन्मृगाङ्कानुवर्तनं रत्ना-करस्य, मम हृदयानुवर्तनं च भवतः।

च० त०—विगतम् अस्थिरं चित्तं चेतो यस्याः सा विचित्ता तस्याः भावः वैचित्त्यम्। तस्माद्धेतोः पुनरुक्तानि पुनर्लिखितानि च तानि लांछनानि विसर्ग-बिन्दु-मात्रादयः तान बिभ्रतीति भृतः। रेखासु पंक्तिषु। लेखेति पाठे अनंग-लेख इत्यर्थः। अक्षराणां श्रेणयः। "वर्णश्रेणिरियमि"ति तारा-परिणये सायनः। कण्ठ्येति, लज्जा सूच्यते। वा अथवा। वाच्येनेत्यौत्सुक्यं व्यज्यते। भावेनेति कारण-वशादूह्येन निजानुराग-विशेष-रूपेणाभि-प्रायेणेत्यर्थः। पक्ष्मले पक्ष्म-निबिडे दृशौ यस्याः तस्या नायिकायाः। व्याक्षेपं मनोरथ-विशेष-व्यापृतत्वं कथयन्ति शंसन्ति। अत्र कर-कंपनादिकं सात्त्विक-भाव-जन्य-मित्यनुसन्धेयम् ॥२४॥

उद्वेल्लते किं नेत्यर्थः। तथा चाग्रतो गमने बाधकं नेति भावः।

इदं वक्ष्यमाणम्। उभयं द्वयम्।

प्रा० प्र०—कण्ठ्येन कण्ठ-स्थलस्थेन, अप्रकटेनेति यावत्। वाच्येन वक्तुं योग्येन। उभयत्र भावेनेति शेषः।

[ संस्कृतच्छाया—विदूषकः ] किम् उद्वेल्लति केलि-कदल्यां करि-शुण्डा-दण्डावेष्टः। उद्वेल्लति कम्पते शिथिलीक्रियते इति यावत्। वेड-शब्दो देशीयः। तस्मादेह्यनुसरावः।

---

1. V. r. वैचित्र्यात्।
2. V. r. खण्डेन।
3. V. r. वाक्येन च।
4. V. r. उक्खीअदि ; उवेक्खीअदि।
5. V. r. कदली-कन्दलीए।
6. V. r. करि-शुण्डावेगो।

विदूषकः। (अङ्गुल्या निर्दिशन्) इदो माधवी-लदा-मण्डवं गदा। जदो[1] मअर-द्धअ-पसिद्धि[2] व्व पअ-रिंछोली[3] दीसदि। ता णिउणं अग्गतो[4] भविअ णिरूवह्म[5]।

(तथा कुरुतः)।

मृगाङ्कावली। (लतान्तरे चन्द्रिका-स्पर्शमभिनीय संस्कृत-माश्रित्य)—

> प्रिय-विरह-महोष्मामर्मरामङ्ग-रेखा[6]-
> मयि[7] हतक-हिमांशो! मा स्पृश क्रीडयाऽपि।
> इह हि तव लुठन्तः प्लोष-पीडां भजन्ते
> दर-जरठ[8]-मृणाली-काण्ड-मुग्धा मयूखाः ॥२३॥

च० त०—प्रियेति। "हतको नीच" इति पद-मंजरी। अयि हिमांशो क्रीडया लीलयापि प्रियस्य विरहेण ध्वनिः, अप्राप्त्या महाश्वासो ऊष्मा सन्तापः। "मर्मरः स्वनिते वस्त्रपर्णानाम्" इत्यमरः। प्रकृते सन्ताप-वशाच्छुष्कामिति यावत्। अंगमेव रेखा रेखा सूत्र-परिणत-तनुं मा स्पृश। इह ममांगे लुठन्तः। दरं किंचित्। जरठा म्लानाश्च ते मृणाली-काण्डाः तद्वन्मुग्धाः सुन्दरा मूढाश्च। "अस्त्रियां मृणालमि"त्यमरोक्तेर्मृणालीति कवेः प्रमादः। तव मयूखाः किरणाः प्लोष-पीडां दाह-बाधां भजन्ते हि। तथा च प्रसिद्धानलोष्मापेक्षया विरहानल-महोष्मा अतिपीडा-कारक इति भावः ॥२३॥

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] इतो माधवी-लता-मण्डपं गता। यतो मकरध्वज-प्रसिद्धिरिव पद-पंक्तिर्दृश्यते। रिंछोली-शब्दो देशीयः। तस्मान्निपुणमग्रतो भूत्वा निरूपयावः।

आ समन्तात् मर्मरो यस्यां सा आमर्मरा ॥२३॥

---

1. V. r. जं दाणीं 2. V. r. पअ-सरणि। 3. V. r. रिंद्धोरी; पअविच्छोलो।
4. V. r. णिहुअं अप्पमत्ता। 5. V. r. णिरूवेह्म।
6. V. r. मुर्मुरामङ्ग-लेखा। 7. V. r. मपि।
8. V. r. जठर।

( इति द्विस्त्रिरभिधाय रोदिति )।

राजा। (विदूषकं प्रति) सखे[1] कारय चक्षुषी पारणाम्[2]। यतः[3]

अन्तस्तारा-तरलित-जलाः[4] स्तोकमुत्पीडभाजः[5]
पक्ष्माग्रेषु प्रसृत[6]-पृषतः कीर्ण-धाराः[7] क्रमेण।
चित्तातङ्कं निज-गरिमतः सम्यगामूत्रयन्तो
निर्यान्त्यस्याः कुवलय-दृशो बाष्प-वारां प्रवाहाः ॥२४॥

च० त०—रोदितीत्यश्लील-कथनम् "अपि ग्रावा रोदिती"ति[8] कवयतां श्रीकण्ठादीनामिव नाटक-विरुद्धमालंकारिकासंभवमपि कवेरचातुर्यं क्षन्तव्यम्। अव्यवधानेन रोदिति राजेति ध्वनिश्च।

पारणाम् अस्या दर्शनमिति यावत्। ननु शनैर्भवतु का त्वरेत्याशंक्य नोपेक्षा-समय इत्याह यतः यस्मात्।

अन्तरिति ध्वनिः, अभ्यन्तरे। तारयोः कनीनिकयोः। तरलितानि लोलितानि जलानि यैः। स्तोकं सूक्ष्मं यथा तथा। उत्पीडं वृद्धिं भजन्तीति भाजः। पक्ष्मणाम् अग्रेषु अचलेषु प्रसृतानि व्याप्तानि पृषंति येषाम्। "पृषन्ति विन्दु-पृषताविʼʼत्यमरः। क्रमेण पर्यायेण कीर्णाः धारा येभ्यः। निजः स्वकीयश्चासौ गरिमा आधिक्यं तस्माद्धेतोः। चित्ते आतंकम्। "रुक् ताप-शंकास्वातंक" इत्यमरः। प्रकृते 'रुक्' मदन-रुजा, 'तापो' विरह-संतापः 'शंका' देव्या भयम्। "भृशार्थे सम्यगि"ति नन्दी। आ समन्तात् सूत्रयन्तः अंकुरयन्तः। दृशोऽस्या इति पंचमी, संबन्धे षष्ठी वा।

प्रा० प्र०—"उत्पीडः स्यादुपचय" इति हेमः ॥२४॥

---

1. V. r. no सखे।
2. V. r. चक्षुषोः पारायणम्; चाक्षुषीं पारणाम्।
3. V. r. no यतः।
4. V. r. तरल-तरलाः।
5. V. r. उत्पीडयन्तः।
6. V. r. ग्रथित।
7. V. r. कर्णधाराः।
8. ÜRC., I. 29, p. 18.

अपिच,

मुक्त्वाऽनङ्गः कुसुम-विशिखान् पञ्च कूणी[1]कृताग्रान्
मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन[2] ।
वारां पूरः कथमितरथा[3] स्फार-नेत्र-प्रणाली-
वक्त्रोद्भ्रान्तस्त्रिवलि-विपिने सारणी-साम्यमेति ॥२५॥

( विदूषकं हस्ते गृहीत्वोपसृत्य सानुराग-प्रश्रयम् )

च० न०—प्रवाहाः निर्यान्ति निर्गच्छन्ति । उल्लेखोऽयम् "अयं तावद्वाष्प"[4] इति श्रीकण्ठ-कवनच्छायानुसारीति बोध्यम् ॥२४॥

भंग्यंतरेणाह अपि चेति । अनंग इति सांगत्वे कैमुतिक-न्याय इति भावः । "कूणनं कुण्ठनं समे" इति रत्नमाला । कुसुमानि अरविन्दाशोक-चूत-नव-मल्लिका-नीलोत्पलानि, तान्येव विशिखान । चतुर्दश-भुवन-स्थित-प्राणि-मात्र-प्रहारेण पंचापि कुण्ठिताग्रा विगत-शिखाश्चेति भावः । अत एव तान मुक्त्वा दूरे परित्यज्य । वरुण-संबन्धिना पत्रिणा शरेण वारुणास्त्रेणेति यावत् । इतरथा एवं न चेत् । कथं स्फारे भूयस्यौ च ते नेत्रे एव प्रणाल्यौ ताभ्यां वक्त्रे वदने उद्भ्रान्तः पातितः । वाराम् अपां पूरः । "प्रवाह" इति महाराष्ट्राः । त्रित्व-संख्या-विशिष्टा वलय एव विपिनं तस्मिन् । "वली वलिरि"ति द्वि-रूपः । "कृष्टेयं वलिरि"त्यौत्तराहाः । सारिणीनां साम्यम् उपमाम् । सारिण्यः "कालवे" इति महाराष्ट्राः । एति प्राप्नोति । तथा च स्मरेण वारुणास्त्रे प्रयुक्ते सत्यधिकतया नेत्र-मार्ग-निर्गतो वारि-पूरस्त्रिवलि वने सारिणी भवतीति भावः ॥२५॥

प्रश्रयो विनयः ।

प्रा० प्र०—कूणीकृतं कुण्ठितम् ॥२५॥

---

1. V. r. कुण्ठी ।
2. Cf. KM. 4. 13 ; URC. act 6, beginning, p., 124.
3. V. r. कथमपरथा ।　　4. V. r. URC. 1. 29. p. 19.

यस्य कृते वहसि[1] रुजा[2] मृदित-मृणालानि[3] गात्राणि ।
यस्य[4] कृते सोऽपि तथा[5] तदखण्डित[6]-शासनो मदनः ॥२६॥

तदयं सम-दुःख-सुखो जनस्त्वां विरचिताञ्जलिः प्रसादयति ।

मृगाङ्कावली । ( सप्रणयं[7] ससाध्वसञ्च तमवलोक्य[8] )
किं एसो अणंगो ? पर-पुरिसो[9], असिप्पि-संपुडा वा[10] मोत्तिअ-

च० त०—राजा तामाह यस्येति । यस्य मम कृते यदर्थमिति यावत् । "यशसेऽर्थ-कृते"[11] इति स्मरणात् । रुजाः संतापान् वहसि धारयसि । रुजा सन्तापेन उपलक्षिता । 'वहसी'ति पद-महिम्ना त्वमित्यर्थात् सिद्धम् । यस्य कृते मृदितानि लोलनेन मर्दितानि मृणालानि शयन-बिसानि यैः । गात्राणि अवयवान् । "वपुष्यवयवे गात्रमि"ति नामनिधानम् । वहसि मदर्थमेव गात्रं धारयसीति भावः । सोऽपि अहमिति यावत् । अपिः संभावनायाम् । तथा त्वं यथा तथैवाहमित्यर्थः । तथा च तव कृते रुजां वहामीत्यादिरूहो राज-पक्षे कार्यः । यद् यस्मात् अहमप्येवं विरुद्धः । तत्तस्मान्मदनः अखण्डितं शासनम् आज्ञा यस्य । "चेप" इति पाठे गात्राणि चेत्यन्वयः, एषोऽह-मित्यर्थः । अत एव "ब्रह्मन् नमामि त्वामेव जन्मिनं द्रविडं कुरु । काशि काशीति नित्यं यो हिण्डमानोऽपि मुच्यते ॥" इति जाति-गुणोल्लासे नाथचरणाः । "एष आगतोऽस्मी"ति क्षेमेन्द्रश्च ॥२६॥

अयमहमित्यर्थः । समे समाने दुःख-सुखे यस्य, त्वया सहेति शेषः । प्रसादयति, प्रसादयामीत्यूहः ।

प्रा० प्र०—रुजा द्वितीया-बहुवचनं तृतीयैक-वचनञ्च । तेन पच्छब्द-द्वय-सार्थक्यम् । "सन्तापे रुग् रुजा स्त्रियाम्" इति वैजयन्ती ॥२६॥

[संस्कृतच्छाया—मृगाङ्कावली] किमेषोऽनङ्गः ? पर-पुरुषः, अशुक्ति-सम्पुटा वा मौक्तिकोत्-

---

1. V. r. वहति । 2. V. r. जनो । 3. V. r. मृणालोपमानि 4. V. r. तस्य । 5. V. r. यदि सोऽपि हि । 6. V. r. तदखण्ड । 7. V. r. सप्रियञ्च ; खगतं सस्पृहं । 8. V. r. no तमवलोक्य । 9. V. r. अण्णवरिसो वरिसो ; अणबभो वरिसो । 10. V. r. संपुडभवा ; संपुडागमा । 11. KavP., I. 2.

उप्पत्ति[1]। किं च चूद[2]-लट्ठिअव्व सहआरी भूता, राशिव्व कण्णआत्तणं[3] उपगदा एदस्स[4] दंसणेण महग्घीकिदा[5] मे तणु पडिभादि[6]। (तं प्रति[7]) सहि, एसो सो[8] राआ

च० त०—औत्सुक्यात् प्रणयः, सात्त्विक-भावात् साध्वसं च। चिह्नं सात्त्विक-भावस्य स्वेदः। "स्वेदः कंपश्च साध्वसमि"ति रूपकादर्शोक्तेः। एष किमनङ्ग इति काकुः। नेत्यत्र युक्तिमाह परेति। तस्य अन्यत्वादिति भावः। अयं तु पुरुषो मदीयः, तस्मादनङ्गो नायम्। किं तु सांगत्वात्तदधिक एव। तथा च सौन्दर्यं नास्य समः कश्चि-दस्तीति भावः। अनङ्ग इति कवेरचातुर्यं ध्वनि-दोषात् "कंदप्पो" इति पाठः कल्प्यः, कंदर्प इत्यर्थः। परश्चासौ पुरुषः। "परान्य-श्रेष्ठयोरि"त्यमरमाला। न विद्येते शुक्ती एव संपुटे आच्छादके यस्याः। वा-शब्द एवार्थकः। तथा च शुक्ती विना मौक्तिकमेव एतदाकारेण परिणतमिति भावः। चूतेति। मे मम तनुरात्मा समष्ट्या अहमिति यावत्। "तनुरात्मनि गात्रे स्त्री कृशे त्रिष्वि"ति केदारः। सहकारीभूतेति योग्यतया उत्तरत्र मिथुनीभावादिष्विति भावः। कन्यकात्वं युवतित्वम्। "कन्या राशि-विशेषे च कुमार्यां युवतावि"त्यर्जुनः। अत एव "कन्या करे मृद्गती"ति नाथ-चरण-व्याख्यात-भारत-चंप्वाम्। "कन्यकरो" इति क्षेत्रियश्च। महार्घीकृता अतिकृतार्थीकृतेति यावत्। तं प्रति राजानमधिकृत्य। स प्रसिद्धः।

प्रा० प्र०—पत्तिः। किञ्च, चूत-यष्टिरिव सहकारीभूता, राशिरिव कन्यकात्वमुपगता, एतस्य दर्शनेन महार्घीकृता मे तनुः प्रतिभाति ॥ सहकारः आम्रः, सहकृत्वश्च। कन्या राशि-विशेषश्च ॥

---

1. V. r. मोत्तिओप्पत्ति।
2. V. r. कांचण।
3. V. r. रीदिव्व कण्णअत्तणं।
4. V. r. जस्स।
5. V. r. दंसण-महद्धिदा ; दंसण-महग्घदा।
6. V. r. तणु मे पलिभादि।
7. V. r. अपवार्य विचक्षणां प्रति ; तां प्रति।
8. V. r. एसो सो सहि।

विज्जाहरमल्लो जो सिरी-सरस्सईणं वल्लहो मअणसुन्दरीए अ।
जस्स वल्लहाओ[1] सिरी-सरस्सई-मअणसुन्दरिओ[2]।

विचक्षणा। आम्[3]।

राजा। विचक्षणे, नन्वेवं वक्तव्यं भवति, यो मृगाङ्कावली-वल्लभो यस्य[4] मृगाङ्कावली वल्लभेति।

( तां प्रत्यञ्जलिं बद्ध्वा )

तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरं[5]
स्फुटीकुरु रदच्छदं भजतु[6] विद्रुमः श्वेतताम्।

च० त०—एष पुरोवर्ती। श्रीति "श्रीलक्ष्मी विष्णुः पृथिवी-पतिरि"ति स्मरणात्। संपदिति केचित्, तन्न, सरस्वतीति मूल-वाक्य-विरोधात्। अत एव "संगतं श्री-सरस्वत्योरि"ति[7] भर्तृमीढः। मदनसुन्दर्याः देव्याः। "यस्ये"त्यादि पुनरुक्तिरन्योन्य-प्रीति-सूचनाय।

"आम् ओमङ्गीकृतावि"ति द्वि-रूपः।

तां मृगांकावलीं प्रति उद्दिश्य।

उपमानान्यधरीकुर्वन् उपमेयानवयवान् वर्णयति तरंगयेति। तरंगयेत्यनेन सह वर्ण-प्रासाय "अंगने" इति संबोधनम् "विशेषास्त्वंगने"त्यमरः[8]। हे अङ्गने, दृशः लावण्य-प्रयुक्त-पूजायां बहुवचनमिति केचित्, अचातुर्यमित्यन्ये, लोचने इत्येवाशयः; कर्म। तरंगय विस्तारय, स-विलासं पश्येति यावत्। तेन हि किं फलमित्यत आह चित्रं कान्त्यादि-गुणैराश्चर्य-

प्रा० प्र०—सखि, एष स राजा विद्याधरमल्लः, यः श्री-सरस्वत्योर्वल्लभो मदनसुन्दर्याश्च ? यस्य वल्लभाः श्री-सरस्वती-मदनसुन्दर्यः ?

आम् इत्यङ्गीकारे।

रदच्छदम् अधरम् ॥२७॥

---

1. V. r. वल्लहा।
2. V. r. मअणसुन्दरी अ।
3. V. r. add राजा।
4. V. r. add च।
5. V. r. ऐन्दीवरं।
6. V. r. व्रजतु।
7. Vikramorvaśī, 5. 24, p. 141
8. II. 6. 3, p. 91.

क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-[1]
मुदञ्चय[2] मुखं मनाग्भवतु च द्वि-चन्द्रं नभः ॥२७॥

मृगाङ्कावली। ( स्वगतम् ) भअवदि मअंक-मंडणे[3] जामिणि! सजामा[4] होहि[5]।

राजा। सखे! न हार[6]-विरहमर्हत्येषा। न चित्र-शिखण्डि-दाम्ना[7] विना चकास्त्युदीची। ( इति कण्ठादवतार्य नायिका-कण्ठे हारं विधत्ते)।

च० त०—करम् इन्दीवरं नीलोत्पलं पततु अध इति शेषः। स्फुटीकुरु प्रकाशय। विद्रुमा-दप्यधरः शोण इति भावः। क्षणं क्षण-मात्रम्। वपुस्तनुम् अपावृणु अपगतावरणं कुरु, दर्शयेति यावत्। कांचनं कर्तृ। कालिकां नैल्यं स्पृशतु, कांचनादपि वपुः पीतवर्णमिति भावः। मनाक् किंचित्। वदनम् उदंचय उन्नमय। नभो गगनं कर्तृ। द्वौ चन्द्रौ यस्मिन् द्विचन्द्रं भवतु। पूर्व-चन्द्रापेक्षया मुख-चन्द्र एव श्लाघ्य इति भावः। तथा च त्वमनवद्य-सर्वावयवा शोभस इति हेतु-गर्भ-विशेषणम् ॥२७॥

स-यामा अवशिष्ट-प्रहरा। जामिणीत्यत्र "यस्य ज"[8] इति तत्त्वम्।

उदीची उत्तरा दिक्। चित्र-शिखण्डिनां दाम्ना मालया विना न चकास्ति न शोभते।

प्रा० प्र०—[ संस्कृतच्छाया—मृगाङ्कावली ] भगवति मृगाङ्क-मण्डने, यामिनि, स यामा भव।

"सप्तर्षयो मरीच्यत्रि-मुखाश्चित्रशिखण्डिनः" इत्यमरः।

---

1. V. r. कालिमा।
2. V. r. व्युदञ्चय ; प्युदञ्चय।
3. V. r. मिअंकाभरणे।
4. V. r. सयंजादामा ; सद-जामा।
5. Add. r. चित्तसिखंडिदाम सत्तरिसि-मण्डलं।
6. V. r. हार-लता।
7. V. r. दाम।
8. PPr. 2. 31. "आदेर्यो जः"।

विदूषकः । उचिद-समागमो क्खु एसो कण्ठं[1] रञ्जेदि । जं दाणीं णित्तल-मुत्ता[2]-हल-मालालङ्करणो सुन्दरी-अणो वक्कोत्ति[3]-विभूसणो विअ[4] सुकइ-वाणी-बन्धो ।

नेपथ्ये । चाळ्ळिज्जंतु[5] लदा-मंडव-पहुदीणि विलास-ट्ठाणाइं, ताणिज्जन्तु कडक्किआ[6]दुआराइं, णिवढ्ढिज्जन्तु[7] अग्गलाओ[8], चिट्ठन्तु जहाणिअ-ट्ठाणं[9] बाहिरदो जामइल्ला[10] सोविदल्ला ।

च० त०—उचितः युक्तः समागमः प्राप्तिर्यस्य । एष हारः । निस्तलानि वर्तुलानि च तानि । "निस्तुले"ति पाठे उपमा-रहितानि । "मुक्ता-कलापस्य च निस्तलस्ये"तीश्वरकृष्ण-मिश्रः[11] । "वक्रोक्तिर्व्यंग्य-चुम्बिते"ति रूपकादर्शोक्तिः । सुकवयो दुष्कवि-भिन्नाः, प्रबन्ध-कर्तार इति यावत् । तेषां वाणी-बन्ध इव सुन्दरी-जन इत्यन्वयः । शोभन इति शेषः । 'सुन्दरी' इति कन्नडेषु परिहास-ध्वनिः ।

अथ देव्याः प्रवेशं सूचयितुमुपक्रमते नेपथ्य इति । "कडक्किआ" इति लाट-देशजः शब्दः । "खिडकी" इति महाराष्ट्राः[12] । "कवाटमररं तुल्ये तद्विष्कम्भेऽर्गलं न ने"त्यमरः[13] । "खिली" इति महाराष्ट्राः[14] । निज-स्थानमनतिक्रम्य यथानिज-स्थानम् । "बाहेर" इति महाराष्ट्राः[15] । सोविदल्लाः कंचुकिनः । वारविलासिन्यो गणिकाः ।

प्रा० प्र०—[संस्कृतच्छाया—विदूषकः] उचित-समागमः खल्वेष कण्ठं रञ्जयति । यदिदानीं निस्तल मुक्ता-फल-मालालङ्करणः सुन्दरी-जनो वक्रोक्ति-विभूषण इव सुकवि-वाणी-बन्धः ।

[संस्कृतच्छाया—नेपथ्ये] शोध्यन्तां लता-मण्डप-प्रभृतीनि विलास-स्थानानि, सङ्कुच्यन्तां गवाक्ष-द्वाराणि, निबध्यन्ताम् अर्गलानि, तिष्ठन्तु यथानिज-स्थानं बहिर्यामवन्तः सौविदल्लाः । चाळ्ळिज्जन्तु-ताणिज्जन्तु-बाहिर-शब्दा देशीयाः । क्लिप्त-याम सेवका इति भावः ।

---

1. V. r. एसो किरणा ; एस कं गा । 2. V. r. मोत्ता ।
3. V. r. वंकुत्ति । 4. V. r. अ । 5. V. r. छालिज्जंतु ।
6. V. r. दिज्जन्तु खलक्किआ ; दिज्जन्तु खलकिआ ।
7. V. r. निपतन्तु ; निवलंतु ; णिवट्टदु । 8. V. r. परगालाओ ।
9. V. r. जधट्ठाणम् । 10. V. r. सल्लिअ ; जामल्लिआ ।
11. KumS., I. 42. 12. Moles., p. 207. 13. II. 2, 17, p. 51.
14. Moles., p. 208. 15. Moles., p. 578.

एसा वारविलासिणी-जण-गहिद-हत्थ-वित्थारि-जण-विणोदिअ-दिवसा[1] सिद्ध-णरेंद-दिण्णोसध-विजिंभिअ[2]-मंजिट्ठ[3]-त्थवअ-सद[4]-सहस्सालंकिदं माहवी-मंडवं दट्ठुम् इच्छइ देवी[5] ।

विचक्षणा । (सत्रासम्) भट्टा विसज्जीअदु प्पिअ-सही[6] ।

राजा । अभ्यर्थये हृदयं[7] यदि प्रार्थना-भङ्गं न करोति[8] ।

च० न०—चातुर्य-विनोदायेति भावः । अत एव "वारांगना-राज-सभा-प्रवेशश्चातुर्य-मूलानी"ति चन्द्रिकायाम् । अथवा वारेषु नत्तदवसरेषु सेवार्थं याः विलासिन्यः स्त्रियः तासां जनेन समूहेन सविनयार्पित-निज-हस्तेषु गृहीतौ हस्तौ यस्याः । एतेन सौन्दर्य-भाग्यातिशयौ सूच्येते । "निवहावसरौ वारावि"ति "जनो लोक-समूहयोरि"त्यमर-गोवर्धनौ । विस्तारिणो भूयांसः ये सिंहासन-चामर-पिंछका-ताल-वृन्त-धुननांशुक-भूषण-पेटिका-खर्जुर--द्राक्षादि--खाद्य-भाजन--भृंगार-तांबूल-करण्डक-पतद्ग्राह–सगुच्छ-चतुरस्र-विचित्र-तर-मुख-वस्त्र-दन्त-कर्ण–निष्काशन-मणि–शलाक--पादुका--पादत्रादि--परिचरण-धुरन्धराः जनाः समुचित-वधू-लोकाः तैर्विनोदितो लीला-कौतुकैर्नीतो दिवसो यस्यै । 'दिअहे'त्यत्र "पयवानामि"ति[9] व-लोपः "दिवसे ह"[10] इति हत्वं च । सिद्धः सिद्ध-पुरुषश्चासौ नरेन्द्रो विष-वैद्यः । माधवी वासन्ती लता, तन्मयं मण्डपम् । शतानां सहस्रं लक्षमित्यर्थः । "शतानां सहस्रं लक्षमि"ति संख्या-निघण्टुः । "शत-सहस्र-संहितायामि"ति[11] पाराशरिः ।

न करोतीति । अहं विसृजामि मनस्तु न विसृजतीति भावः । "हृदयं मन"इति नन्दी ।

प्रा० प्र०—एषा वारविलासिनी-जन-गृहीत-हस्त-विस्तारि जन-विनोदित-दिवसा सिद्ध-नरेन्द्र-दत्तौषधि-विजृम्भित-माञ्जिष्ठ-स्तवक-शत-सहस्रालङ्कृतं माधवी-मण्डपं द्रष्टुमिच्छति देवी ।

अतिबाहुल्य-द्योतनार्थं शत-सहस्रेत्युक्तम् ।

[ संस्कृतच्छाया—विचक्षणा ] भर्तः, विसृज्यतां प्रिय-सखी ।

---

1. V. r. दीविउज्जोअ-जणिद-दिवसव्व ; add. r. देवी ।
2. V. r. संद्दिद, संद्दिद ; सुंद्दिद ।
3. V. r. मजित्थ ।
4. V. r. no सद ।
5. V. r. आअच्छदि ; आअदित्ति ।
6. V. r. सहीम् ।
7. V. r. ते हृदयं ; ते दयां ।
8. V. r. करोसि ।
9. PPr., 2. 2, "क-ग-च-ज-त-द-प-ज-वां प्रायो लोपः ।"
10. PPr., 2. 46, "दिवसे सस्य" ।
11. See the colophon at the end of any chapter of the MahBh. "शत-साहस्र्यां" ।

विदूषकः । [1]तुरिदं विसज्जीअदु, अण्णधा मउन्ना विअ[2] पञ्जर[3]-णिबद्धा भविस्सामो[4] ।

(इति यथायथं परिक्रम्य निष्क्रान्ताः सर्वे) ।

इति विद्ध-शालभञ्जिकायां तृतीयोऽङ्कः ।

च० त०—शकुन्ताः पक्षिण इव । "पंजरः पनगावाम-पुट-निर्वन्धयोरि"त्यच्युतः । उपसंहरतीतीति, उक्त-प्रकारेणेत्यर्थः । "आगतास्तु यथा यानास्तथेत्यत्र यथायथम्" इत्यगस्त्यः । "जरो आलेतशगेले" इति महाराष्ट्राः । इत्यलमतिविस्तरेण ।

इति महाराज-पद...सुन्दरी-कमलीय-सहज-समाख्यान-व्याख्याने तृतीयोऽङ्कः ॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] त्वरितं विसृज्यताम, अन्यथा शकुन्ता इव पञ्जर-निबद्धा भविष्यामः ।

इति महाराज-पद...प्राण-प्रतिष्ठा-नाम-व्याख्यायां तृतीयोऽङ्कः ॥

---

1. V. r. add वअस्स ।
2. V. r. पारावद-सउंदव्व ।
3. V. r. no पञ्जर ।
4. V. r. चिट्ठिस्सामो ।

## चतुर्थोऽङ्कः

नेपथ्ये । सुप्रभातं देवस्य केयूर[1]वर्षस्य । सम्प्रति हि

व्रजत्यपर-वारिधिं रजत-पिण्ड-पाण्डुः शशी
नमन्ति जल-बुद्बुद-द्युति-स[2]पङ्क्तयस्तारकाः ।
कुरण्टक-विपाण्डुरं दधति धाम दीपाङ्कुरा-
श्चकोर-नयनारुणा भवति दिक् च सौत्रामणी[3] ॥१॥

च० त०—अथ चतुर्थांक-निर्वहण-सन्धि प्रक्रममाणः सोत्कण्ठं राजानं विदूषकेण सह प्रवेशयिष्यन ग्रीष्मापराह्न-मज्जनोत्सवं वर्णयिष्यन देव्या राज्ञे कल्पितमलीक-विवाहं संविधानेन यथार्थयिष्यन् सेनापतिना श्रीवत्सेन कुन्तलाधिपतिं वीरपाल-नामानमपि स्व-राज्येऽभिषेचयिष्यन भागुरायण-नीत्या प्रभवे चक्रवर्तित्वमुपहारीकरिष्यन कविरुत्-स्वप्नायमान-विदूषक-पत्नी-मुखेन भूत-भविष्यत्-कथोपक्षेपाय प्रवेशमंकुरयन् "आरंभश्च पटाक्षेप-नेपथ्याकाश-भाषितैरि"ति नाट्य-प्रकाशोक्त-लक्षणादाह—नेपथ्य इति । रंगतल-प्रस्तारित-यवनिका-पटाद्बहिरित्यर्थः ।

प्रथमांके प्रभात-मध्याह्नौ, द्वितीयांके सायोन्मेषः, तृतीयांके तिमिर-जाल-चन्द्रोदयौ वर्णितौ । अत्र चन्द्रास्तमनं कर्पूरचण्डो नाम वन्दी वर्णयति—व्रजतीति । रजतस्य पिण्डो गोलः, तद्वत् पाण्डुः शुभ्रः । शशी चन्द्रः । अपरः पश्चिमश्चासौ, "पूर्वापरावि"ति[4] भर्तृमीढः । व्रजति । "अयति" "भजती"ति च पाठौ । "केन्द्वोरस्तमनं त्वस्ते पाते वा पश्चिमांबुधावि"ति बलभद्रः । अत एव "परिपतति पयोनिधौ पतंग" इति भोजः । वारि-पिण्ड-पाण्डवो ध्वनयः "तारास्थि-संचयं कर्तुमिवेन्दुरसृजत करानि"ति क्षेमेन्द्रादि-प्रयोगवत् क्षन्तव्याः । जल-बुद्बुदाः

प्रा० प्र०—अथ निर्वहण-सन्ध्यङ्ग-भूतं प्रवेशकमारभते नेपथ्ये इत्यादिना ।

---

1. V. r. कर्पूर ।
2. V. r. प्रतिम ।
3. V. r. सौत्रामिणी ।
4. KumS. 1. 1.

( ततः प्रविशति[1] विदूषकः सुप्ता ब्राह्मणी च[2] )

विदूषकः। भो पुक्खरमाले[3] उट्ठेहि संज्झां वन्दिदुं[4]। अदिक्कन्ता रअणी। सुण नरेन्द-वन्दिणो कप्पूरचण्डस्स पभाद-भोआवलिं। ( विमृश्य ) कहं देवी-गरिट्ठ-गोट्ठी-जणिद-जागरण-किलन्ता[5] सुत्ता बह्मणी[6] ? अज्जवि ण णिद्दं[7] मुंचेदि[8]। ता[9]

च० त०—द्युतौ कान्तौ स-पंक्तयः समान-पंक्तयः सदृशा यासां ताः। स्फोट-बुद्बुदत्व-निरासाय जलेति विशेषणम्। तारकाः नक्षत्राणि, नमंति नम्रीभवंति, अधो यांतीति यावत्। दीपा एव अंकुराः अंकुरा इव स्थूल-मूलाः सूक्ष्माग्रा इति यावत्। "कुरण्टक-कुरण्डकावि"त्युभय-कोशः, तत्-पुष्पवत् विशेषेण पांडुरं शुभ्रं धाम कांति दधति धारयन्ति। सुत्रामणः इयं सौत्रामणी प्राची दिक्। चकोरस्य नयने इव अरुणा शोणा भवति। "अक्षि चाकोरमरुणमि"ति वस्तुनिर्णयः। तथा च चन्द्र-नक्षत्र-दीप-कान्त्यपगम-पूर्वकमरुणोदयो जात इति भावः ॥१॥

तत इति। प्रवेश-सूचनं कवेरचातुर्यम्, "नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वे"ति लक्षणात्।

पुष्करमालेति विदूषक-पत्न्या नाम। "स्त्रीणां च पुरुषाणां च संध्या वन्द्यैव

प्रा० प्र०—सपंक्तयः सदृशाः। "तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः" इत्यमरः। विपाण्डरं पीत-प्रायमिति यावत्। क्वचित् पीत-श्वेतयोरभेदः कवि-समय-सिद्धः। "पात-सातयोरैक्यं हरति लीलयोरि"ति रूपकादर्शे। सौत्रामणी ऐन्द्री ॥१॥

[ संस्कृतच्छाया—विदूषकः ] भोः पुष्करमाले, उत्तिष्ठ सन्ध्यां वंदितुम्। अतिक्रान्ता रजनी ; शृणु नरेन्द्र-बन्दिनः कर्पूरचण्डस्य प्रभात-भोगावलीम्। कथं देवी गरिष्ठ-गोष्ठी जनित-

1. V. r. प्रविशतः विबुद्धः। 2. V. r. सुप्ता च ब्राह्मणी।
3. V. r. पुत्ताणं मादे। 4. Add. r. देहि ; एहि।
5. V. r. कलित ; कलिता। 6. V. r. add. जा।
7. V. r. णिद्दं ण। 8. V. r. मुंचदि। 9. V. r. तदो।

पडिवालेमि। जदो सुत्तो[1] ण पडिबोधिदव्वत्ति बह्मणा भणंति[2]।

ब्राह्मणी। ( उत्स्वप्नायमाना[3] ) विण्णत्तो विअक्खणा-मुहेण देवीए भट्टा। जह ओअल्लागदस्स मिअङ्कवम्मस्स बहिणी[4] मिअङ्कावली णाम सिणिहेण भादुअं दट्ठुं आअदा। सन्दिट्ठञ्च मे मादुल-चंदवम्मणा[5] मादुलाणीए हारलदाए अ। जधा, एसा दे बहिणी मिअंकावली देवण्ण-गणएहिं[6] कहिद[7]-चक्क-वत्ति-घरिणीभावा, सा[8] तुए[9] उचिदं वरं[10] लंभइदव्वा त्ति[11]। तदो

त० च०—नियश" इति स्मृतेः। भोगावलिं स्तोत्र-पद्धतिम्। "सभा सल्लापयोर्गोष्ठी"ति समासः। "गोष्ठी" इति महाराष्ट्राः[12]। "सुप्तान्न बोधयेत् प्राज्ञः" इति स्मृतेः।

मिअंकवम्मस्सेति। अस्मिन् मृगांकवर्मणि देव्याः पुरुषत्व-बुद्धिरेव, स्त्रीत्व-गन्धोऽपि नास्तीति सूक्ष्म-बुद्धिभिरतिदृढमवगंतव्यम्, कुवलयमालामधिकृत्य "तं च पडिच्छिदवदी देवी णिअ-मादुल-भाउअस्स[13]- मिअंकवम्मस्स किदे" इति द्वितीयांक-प्रवेशके कुरंगिकां प्रति तरंगिकयाऽभिधानात्। "बहिणी मिअंकावली णाम" इत्यादिकं तु अलीक-विवाह-प्रतिकाराय वंचक-मनसा देव्या कथितमिति विज्ञेयम्। अत एव "पेक्ख देव्व-दुव्विलसिदाइं, जं मए केलि-क्कमेण अलीअं परिकप्पिदं तं सच्चत्तणेण

प्रा० प्र०—जागरण-क्लान्ता सुप्ता ब्राह्मणी अद्यापि न निन्द्रां मुञ्चति? तस्मात् प्रतिपालयामि। यतः सुप्तो न प्रतिबोधितव्य इति ब्राह्मणा भणन्ति।

[ संस्कृतच्छाया—ब्राह्मणी ] विज्ञप्तो विचक्षणा-मुखेन देव्या भर्ता। यथा ओल्ला-गतस्य मृगाङ्कवर्मणो भगिनी मृगाङ्कावली नाम स्नेहेन भ्रातृकं द्रष्टुमागता। सन्दिष्टञ्च मे मातुलेन चन्द्रवर्मणा मातुलान्या हारलतया च। यथैषा ते भगिनी मृगाङ्कावली दैवज्ञ-

---

1. V. r. सुह-सुत्तो। 2. V. r. मंतयंति।
3. V. r. उत्स्वप्नायते। ब्राह्मणी। 4. V. r. पिअ-वहिणी।
5. V. r.-वम्म-सिरिणा। 6. V. r. देवण्णएहिं। 7. V. r. कहिदं।
8. V. r. एसा। 9. V. r. तए। 10. V. r. उविदं वरं ; दिदं वरं।
11. V r. लंभइदव्वेत्ति। 12. Moles. p. 248.
13. P. 278. "भावुकस्स"।

देवी देवं विण्णवेदि, ण तुह्माहिंतो अण्णो वरो एदाए जोग्गो[1]। जदो पोम्मराअ[2]-मणी एव्व[3] एआवलिं[4] अलंकरेदि। ता परिणेदु अज्जउत्तो। ण अत्तणो सिरी अण्ण-हत्थे संकमयिदव्वा होदि[5]। णअ[6] एदं आसंकिदव्वं किंत्ति[7] देवी अत्तणो सावत्तणेण[8] पअट्टदित्ति[9]। जदो महाउल-प्पसूदानं भत्तुणो प्पिअं एव्व अप्पणो पिअंत्ति[10]। किंच, पुणो परिणाविदो एव्व मए अज्जउत्तो[11]। तं जधा, मअधाहिव[12]-सुदं अणंगलेहं, मालव-णरेंद[13]-दुहिअं[14]

च० त०—परिणदं"इति देव्या वक्ष्यत इति दिक्। भादुअ मृगांकवर्माणमित्याशयः। मानुलान्या मातुल-पत्न्या। दैवज्ञाः शुभाशुभज्ञाः। लग्नादिकं गणयंतीति गणकाः प्रश्न-फल-वादिनः। वरं पतिं लंभइदव्वा प्रापयितव्या। विण्णवेदीति। विचक्षणा तावद्देव्या कथितमनुवदतीत्यनुसंधेयम्। पोम्म-राअ-मणी इति कवेः प्रमादः, पौनरुक्त्यात्। "शोण-रत्नं

प्रा० प्र०—गणकैः कथित चक्रवर्ति-गृहिणी-भावा, सा त्वयोचितं वरं लम्भयितव्येति। तस्माद्देवी देवं विज्ञापयति न युष्मत्तोऽन्यो वर एतस्या योग्यः। यतः पद्मराग-मणिरेवैकावलीमलङ्करोति। तस्मात् परिणयत्वार्यपुत्रः। नाऽऽत्मनः श्रीरन्य-हस्ते संक्रामयितव्या भवति। न चैतदाशङ्कितव्यं किमिति देव्यात्मनः सापत्न्येन प्रवर्तत इति। यतो महाकुल-प्रसूतानां भर्तुः प्रियम् एवाऽऽत्मनः प्रियमिति। अप्पणो इत्यत्र "आत्मनि प" इति पत्वम्। किञ्च, पुनः परिणायित एव मयार्यपुत्रः। तद् यथा, मगधाधिप-सुताम् अनङ्गलेखाम्, मालव-नरेन्द्र-

---

1. V. r. जोग्गोत्ति ; जोग्गो अत्थि।
2. V. r. पद्म-राअ।
3. V. r. no एव्व।
4. V. r. राआवलि।
5. V. r. अत्तणो सिरी अण्ण-हत्थ-गआ कादव्वा न होदि।
6. V. r. no अ।
7. V. r. कित्ति ; किं तं।
8. V. r. सावत्तणेण ; सावत्तणए।
9. V. r. पअट्टदि।
10. V. r. भत्तुनो पिअं पिअं णहु अत्तणो प्पिअं प्पिअंत्ति।
11. V. r. अज्जउत्तो मए।
12. V. r. महधाहिवस्स।
13. V. r. णरेन्दस्स।
14. V. r. दुहिदं।

रअणावदिं[1] प्पिअ-दंसणं अ, पंचाल-राज[2]तणअं विलासवदिं, अवंतीसर-सुदं केलिवदिं,[3] कलावदिं अ,[4] जालंधरेस-कुमारिं[5] लीलावदिं, केरल-राअ-पुत्तिं पत्तलेहं च[6]। ता अज्ज चिअ पदोसे[7] विआह-लग्गो त्ति उणो उणो भणिदेण महाराएण तहत्ति पडिवण्णं[8]। ता मेहल-वुत्तंतं पडिकादुं अलीअ-विवाहेण विडंबीअदु[9] भट्टा। कुविदस्स मे भत्तुणो उत्तरं ईसिअरं[10] हुविस्सदि।

च० त०—लोहितकः पद्म-राग" इति "एकावल्येक-यष्टिके"ति चामरः। अवन्ती पुरी-भेदः। "अवन्ती विशाले"त्यमरः। जलंधरो देशः। चिअ इत्यवधारणे। लग्नं मुहूर्तः। "विवाह-लग्नमि"ति वदता कविना निजं महाराष्ट्रत्वं प्रकटीकृतम्। प्रतिपन्नमंगीकृतमिति यावत्। भट्टा इत्यत्र "र्तस्य टः"[11] इति टत्वम्। भर्तरि कुपिते कथमित्याशंक्याह कुपितस्येति। भर्तुरिति संबन्धे षष्ठी। उत्तरं पुनर्वशीकरण-रूपम्। ईषत्करम् अप्रयास-साध्यमिति यावत्। एतेन उद्दामतरः सौन्दर्यातिशयो व्यज्यते।

प्रा० प्र०—दुहितरं रत्नावतीं प्रियदर्शनाञ्च, पाञ्चाल-राज-तनयां विलासवतीम्, अवन्तीश्वर-सुतां केलि-मतीं कलावतीञ्च, जालन्धरेश्वर-कुमारीं लीलावतीम्, केरल-राजपुत्रीं पत्रलेखाञ्च। तस्मादद्यैव प्रदोषे विवाह-लग्नमिति पुनः पुनर्भणितेन महाराजेन तथेति प्रतिपन्नम्। तस्मान्मेखला-वृत्तान्तं प्रतिकर्तुमलीक-विवाहेन विडम्ब्यतां भर्ता ; कुपितस्य मे भर्तुरुत्तरम् ईषत्करं भविष्यति।

---

1. V. r. रअणावलीं। 2. V. r. पञ्चाल-णाहस्स। 3. V. r. केलिवदीं।
4. V. r. no कलावदिं अ। 5. V. r. कुमारिअं।
6. V. r. त्ति ; add. देवीओ एव्व परिणीअ दिराणवन्तीओ।
7. V. r. दुदीअ-प्पहरे ; पहरुद्देसे। 8. V. r. पडिरणादं।
9. V. r. विडम्बीअतां। 10. V. r. भादुअस्स विवाह-महो उत्तरं ; भातुणो अरण-विवाह-महुत्सवो उत्तरो ; उत्तरं ईरिसंतरं।
11. PPr. 3. 22, p. 68.

विदूषकः। (विहस्य) जइ धम्मं अधम्मो जइस्सदि। जाणिस्सं[1] जो एत्थ विडंबिदव्वो। (विचिन्त्य) ता चिरं पाअइदव्वा जुण्ण-मज्जरी[2] दुद्धं ति कंजिअं[3]। कुवलअ-मालाए उण महाविलंवणं[4], जं महिला[5] महिलाए परिणेदव्वा[6]। (ऊर्ध्वमवलोक्य) महदी वेला वट्टदि, ता उट्ठावेमि[7] बह्मणिं[8], उट्ठेहि, देवी तुमं वाहरदि।

च० त०—नन्वेष मनोरथः कदा पूर्णो भविष्यतीत्याकांक्षायां तदा भविष्यतीत्याह—यदीति। यदेत्यर्थः। "यदि तदे"ति गौरीकान्तः। कदापि नैवं भविष्यतीति भावः। "अइ धम्मं अधम्मो" इति पाठे धर्ममधर्मो वेत्यर्थः। 'अयी'ति पत्नीं प्रति संबोधनम्। राजाविडंवने धर्मं जेष्यति। "धर्ममस्त्रियामि"त्यमरः। वा अथवा देव्यविडंबने अधर्मो जेष्यतीति भावः। यः राजा। जा इह येत्यर्थः, देवीति यावत्; विडंविदव्वेति चोह्यः। मार्जारी कांजिकं पाययितव्या पानं कारयितव्या। तथा च वृद्ध-मार्जारीवदेव वंचनीयेति भावः।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] यदि धर्ममधर्मो जेष्यति। ज्ञास्यामि योऽत्र विडम्बयितव्यः। तस्माच्चिराय पाययितव्या जीर्ण-मार्जारी दुग्धमिति काञ्जिकम्॥ तक्रमित्यर्थः। "तक्रं काञ्जिकमित्यपी"ति पदार्थमञ्जरी। ओदनमण्डमिति केचित्॥ कुवलयमालायाः पुनर्महाविडम्वनं, यन्महिला महिलया परिणेतव्या। महती वेला वर्तते, तस्मादुत्थापयामि ब्राह्मणीम्। उत्तिष्ठ, देवी त्वां व्याहरति॥ आकारयतीति भावः।

---

1. V. r. देवो धम्मो वा जाणिस्सदि। 2. V. r. तिन्हामज्जारी।
3. V. r. कंजिअं दुद्धंति।
4. V. r. महाविलंवणत्थं; महाविलंवणात्थं; महाविलंबना।
5. V. r. no महिला। 6. V. r. परिणीदा।
7. V. r. विबुज्झावेमि; विउद्धावेमि।
8. V. r. बह्मणीं; add. r. बह्मणि after बह्मणि।

ब्राह्मणी । ( विबोध-नाटितकेनोत्थाय ) अए उच्छूरं[1] वट्टदि । (तं विलोक्य) हंहो मिअतिण्हिआ-जामादुअ[2] ! तुमं परमेसर-पस्सवद्दी[3] होहि । अहं उण देवीं अणुसरिस्सं । ( इति परिक्रम्य निष्क्रान्तौ ) ।

( प्रवेशकः ) ।

( ततः प्रविशति राजा विदूषकश्च ) ।

राजा । ( मदन-संतापयोः[4] पीडामभिनीय ) सखे ! संप्रति शैशवादपक्रामति ग्रीष्म-समयः ।

च० न०—परिहसति मिएति । "निण्हिअ" इत्यत्र "ष्णस्य ण्ह"[5] इति ण्हत्वम् । जामादुअ इति कालिदासादीनामिव कवेः प्रमादः । "पितृ-भ्रातृ-जामातृणामर"[6] इत्यनुशासनेन "जामाअरो" इति वक्तव्यस्य साधीयस्त्वात् । "राजेशौ परमेश्वरावि"ति पद-माला ।

इति प्रवेशकः ।

मदनो नायिका-प्रयुक्तः । संतापो ग्रीष्मजः । शैशवात् बाल्यात् । अपक्रामति अपगच्छति, ग्रीष्मस्तरुण इत्यर्थः, अभिवृद्ध इति यावत् ।

प्रा० प्र०--[ संस्कृतच्छाया—ब्राह्मणी ] अये, उत्सूरं वर्तते ॥ "उत्सूरोदित-भूयिष्ठ-सूर्योत्ताल-प्रमाणकम्" इत्यगस्त्यः ॥ भो मृगतृष्णिका-जामातस्त्वं परमेश्वर-पार्श्ववर्ती भवाहं देवीमनुसरिष्यामि ॥ जामादुअ इत्यत्र "स्वार्थे को वे"ति[7] क-प्रत्ययः । परमेश्वरो राजा ।

---

1. V. r. प्पच्चूसं ।
2. V. r. मिअ-तिण्हिअ-जामादुअ ।
3. V. r. परमेस्सर-पस्सवद्दी ; पास्सपरिवत्ती ।
4. V. r. मदनातपयोः ।
5. Cp. PPr. 3. 33. p. 73.
6. PPr. 5, 34—35, p. 141.
7. PPr. 4. 25. p.113.

रजनि-चरम-यामेष्वादिशन्ती रतेच्छां
किमपि कठिनयन्ती नारिकेली-फलाम्भः ।
अयि[1] परिणमयित्री राजरम्भा-फलानां
दिन-परिणति-भोग्या[2] वर्तते ग्रीष्म-लक्ष्मीः ॥२॥

अपि च,

जलार्द्रैः संव्यानं[3] विस-किसलयैः केलि-वलयाः
शिरीषैरुत्तंसा विचकिलमयी हार-रचना ।

च० त०—तं पंचभिर्विशिनष्टि रजनीति । यामेष्विति वहु-वचन-महिम्ना रजनेः पूर्व-यामापेक्षया उत्तरोत्तरं संताप-जनितायास-भरापगम-वशात् क्रमेण चरम-यामेषु द्वितीय-तृतीय-चतुर्थ-प्रहरेष्विति तत्तदनुभवो बोध्य इति नाथ-चरणाः । रतेच्छां संभोग-वाञ्छाम् । आदिशंती समन्तात् अतिसृजंती । नारिकेल्याः फलस्यांभः जलं किमपि किंचित् शुष्कीभाव-तारतम्येनेति भावः । कठिनयंती फल-परिपाक-दशायै अभिमुखीकुर्वंती । "नारिकेली नालिकेरी द्वयोरि"ति द्वि-रूपः[4] । राजरंभा-फलानां कदली-विशेष-फलानामपि । "रायकेली" इति महाराष्ट्राः । "पच्यनाडनले" इति द्रविडाः । परिणमयित्री पक्वता-सारस्य-कर्त्री । ग्रीष्मस्य ज्यैष्ठाषाढयोः लक्ष्मीः संपत्तिः सत्तेति यावत् । दिनस्य परिणतौ अवसाने सायमुन्मेषादारभ्य प्रभात-पर्यन्तमित्याशयः । भोग्या सुखादिकं भोक्तुम् अनुभवितुं योग्या वर्तते । तथा च प्राह्ण-मध्याह्नापराह्णाः दुस्सह-दुस्सहतम-दुस्सहतरा इति भावः ॥२॥

अपि च किं चेत्यर्थः । शुचौ ग्रीष्मे । "पवित्र-ग्रीष्मयोः शुचिरि"ति संसारा-वर्तः । एणाक्षीणां मृग-दृशाम् । जलार्द्रैः, "बाला" इति महाराष्ट्राः[5] संव्यानम् उत्तरीयम् । मृणालैः पल्लवैश्च । शिरीष-पुष्पैः । विचकिलमयी मल्लिका-प्रचुरा । प्राचुर्ये मयट् । "वट्टमो

प्रा० प्र०—"जलार्द्रन्तु जलाशयम्" इति यादवः ।

1. V. r. अपि । 2. V. r. योग्या । 3. V. r. जलार्द्राः शष्पाणां ।
4. D R K. ed by Viṣṇudatta Śarman, p. 412, v. 30, "नारिकेलादिषु द्वैधमाह केलादि-वर्जनात् ।" 5. Moles. p. 577.

शुचावेणाक्षीणां मलयज-रसार्द्राश्च तनवो
विना तन्त्रं मन्त्रं रतिरमण-मृत्युञ्जय-विधिः ॥३॥

विदूषकः । एव्वं एदं[1] । अह्मारिस-जणस्स[2] खलासअस्स[3] उडु-प्पाओ वट्टइ घम्मो[4] ।

राजा । ( निःसहं विहस्य ) [5]ललाटंतपस्तपनो नखंपचाश्च पथि[6] पांसवः । तदसूर्यंपश्या[7] राज-दाराः । अपि च,

च० त०—गारा" इति महाराष्ट्राः[8] । हारस्य रचना शिल्पम् । चन्दन-द्रवैः क्लिन्नाः तनवः वपूंषि च । एतत् सर्वमिति शेषः । मंत्रं मनुं, तंत्रं विध्युक्त-कर्माचरणं चेत्यनुषंगः । विना रतिरमणस्यानङ्गस्य मृत्युंजय-विधिः "त्र्यंबकमि"त्यादि-श्रुति-सिद्ध-मृत्यु-निवारक-दीर्घायुर्विधानमिति घट्टार्थः । तथा च जलार्द्र-संव्यानादि-विशिष्टा एणाक्ष्य एव नित्यं दीर्घायुर्मदन-जनन्य इति भावः । अत्र संव्यानादिभिः साकं तनव इति कथनं प्रक्रम-भंगः । तंत्रमिति ध्वनिः ॥३॥

खलः सर्व-दूषकः आशयोऽभिप्रायो यस्य । "नक्षत्रमुडु वा स्त्रियाम्" इति शब्दमाला ।

निस्सहं यथा तथा । "असह्यं निस्सहमि"ति विक्रमार्कः । यद् यस्मात् तपनो ललाटंतपः । पांसवो रेणवश्च नखंपचाः । तत् तस्मात् । "असूर्यंपश्या राज-दारा" इति न्यायः कविना हेतु-द्वयोपन्यासेन चमत्कृत इत्यूह्यम् । "तपत्यर्को ललाटंतप" इति, "ये पचंति नखं मार्गे पांसवस्ते नखंपचा" इति, "उक्ता असूर्यंपश्यास्ते सूर्यं पश्यंति नैव ये" इति मुक्तावली-कपिल-केदाराः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ]—एवमेतत् । अस्मादृश-जनस्य खलाशयस्य उडु-प्रायो वर्तते घर्मः ॥ उडुवच्छीत इति भावः ।

---

1. V. r. एवं णेदं । 2. V. r. no जणस्स । 3. V. r. खल्लाडस्स ।
4. V. r. फुलिंग-उप्पादओ घम्मो वट्टदि । 5. V. r. add अति ।
6. V. r. पार्थिवाः । 7. Add. r. श्च वर्तन्ते ।
8. For मोगारा, Moles, p. 668.

हरन्ति हृदयानि यच्छ्रवण-शीतला वैणवो
यदङ्कित[1]-करंबिता शिशिर-वारिणा[2] वारुणी ।
भवन्ति च हिमावहाः[3] स्तन-भुवो यदेणीदृशां[4]
शुचेरुपरि[5] संस्थितो रतिपतेः प्रमादो गुरुः ॥४॥

च० न०—हरंतीति । यच्छब्द-त्रयस्य यस्मादित्यर्थः । श्रवणयोः शीतलाः, सुख-करा इति यावत् । "वैणवः सुषिरोपेत-वंश-वाद्यानी"ति जयः । नादैरिति शेषः । वैणव इत्युप-लक्षणं, मुख्यतया, वीणादिकमपि गृह्यते । मनांसि हरंति । यत् शीतल-जलेन अंकित-करंबिता वारुणी मद्यम् । हृदयानि हरतीत्यूह्यम् । यत् एणी-दृशां स्तन-भुवः कुच-तटा हिमं आवहंति हिमावहाः हिमवच्छीतला भवंति । "कूपोदकमि"त्यादि-वस्तु-निर्णय-न्यायेन शीतलत्वमिति भावः । तत् तस्मात् । शुचेः ग्रीष्मस्योपरि ग्रीष्म-तौविति यावत् । संस्थित इति कवेः प्रमादः । "हिंसार्थे"त्यमरोक्त्या[6] नाशार्थकत्वात् । अत एव "वीरासने सुस्थितमि"ति विशेषज्ञाः । "यत्तदोर्नित्य-संबन्ध" इति कवि-समयस्य दुर्निवारतया पद्ये यच्छब्द-सत्त्वात् तच्छब्दस्यावश्यकत्वेनाध्याहारे गौरवाच्च "तत् स्थित" इति पाठं परिकल्प्य संधि-संकटं "प्रीति-योगात् स्थितमिवे"ति [7]मुद्रा-राक्षसीय-प्रयोगवत् क्षन्तव्यम् । अथवा "भाति तद्रतिपतेरि"ति पाठः परिकल्प्यः । वारुणी-प्रसंगस्तु शिष्ट-परिगृहीतो युगान्तर-विषय आभिप्रायिकः । अत एव

"रुद्र-विष्णु-विधीन्द्राद्यैर्मुनिभिर्देव्यनुग्रहे । दर्शनीयं सशीतांबु संपूज्य मधु पीयते ॥"

इति शक्ति-संहितायाम् । "तामपाययत पानमंबिकामि"ति[8] कुमारसंभवे । "रामो-

प्रा०प्र०—अङ्कित-करम्बितेत्येकं पदम् । अङ्किता चिह्निता, करम्बिता दर्शनीयेति यावत् । शुचेः ग्रीष्मस्य ।

---

1. V. r. यदर्चति ; यदर्दति ।
2. V. r. शिशिर-वायुना
3. V. r. हिमोपमाः ।
4. V. r. यदेणी-दृशः ।
5. V. r. रुचेरुपरि ।
6. Cp. AK., II, 8, 118.
7. Mudrā R., II, 14.
8 KumS., 8. 77.

एवं च सखे ! संश्रृणुमः—

मूलं वालधि[1]-वीरुधां सुरभयो जाती-तरूणां त्वचः
साराश्चन्दन-शाखिनां किसलयान्यार्द्राण्यशोकस्य च ।
शैरीषी कुसुमोद्गतिः[2] परिणमन्मोचश्च[3] सोऽयं गणो[4]
ग्रीष्मेणोष्म-हरः पुरा किल ददे दग्धाय पञ्चेषवे ॥५॥

च० त०—ऽशोक-वने पानं सीतया सहितः पपावि"त्युत्तर-रामायणे[5] । "वारुणीमपिबद्च्यु-नाग्रज" इति यादव-चरिते च । यत्तु भगवत्पाद-कालिदासादिभिरंगीकृतमस्मिन्नेव[6] युगे, तत्र तेषां तेजोविशेषेण प्रत्यवायो न विद्यते[7] । नेदानींतनैरेवं विधेयमिति शिष्टाचार इति दिक् ॥४॥

एवं च एवमपि । [ संश्रृणुमः ] वक्ष्यमाणमित्यर्थः ।

मूलमिति । पुरा पूर्वं । ग्रीष्मेण वालधि-नामक-लतानां मूलम् आदि-भागः । जाती-तरूणां "जाय-फलंच वृक्ष" इति महाराष्ट्राः[8] । त्वचः चर्माणि । साराः मज्जाः, स्थिरांशा वा । "मगज" इति महाराष्ट्राः । शैरीषी शिरीषाणां वृक्षाणां संबन्धिनी । उद्गतिः उदयः । परिणमन्त्यः पक्वीभवन्त्यश्च ताः सुप्रसिद्धाः । अयं गणो वर्गः । दग्धायेत्यनुपपन्नं स्वरूपस्यैव हानेः, तथापि पुत्र-वत्सलतर-लक्ष्मी-नारायणादि-प्रार्थ-नाभिश्चतुर्दश-भुवनैक-जनन्या पर-देवतया पुनर्जीवितायेत्याशयः । नन्विदं मतांतर-विरुद्धमिति चेन्न न, भेद-पर-मतांतराणाम् आधुनिकत्वेन "करांगुलि-नखोत्पन्न-नारायण-दशाकृतिः । लग्न-चामर-हस्त-श्रीशारदा परिसेविता ।" इत्यादि-पुरातन प्रक्षि-

प्रा० प्र०—"वालधिः शीतमूला चे"ति केशवः । मोचाः कदल्यः ॥५॥

---

1. V. r. वालक ।
2. V. r. कुसुमोज्झितिः ; कुसुमोन्नतिः ।
3. V. r. मोचाश्च ।
4. V. r. गणे ।
5. Cp. Rāmāyaṇa. 7. 42. 18-19, p. 2901.
6. E. g. Mālavikāgni., III, p. 48, l. 3—"इरावती ।......" ṚtuS., 5. 10, p. 62.
7. Cp. BhāgP. 10. 33. 29.
8. Moles. p. 315.

( निःसहतामभिनीय )

मयि[1] शिशिरतरोपचार-योग्यं द्वितयमिदं युगपन्न सह्यमेव ।
जरठित-रवि-दीधितिश्च कालो दयित-जनेन समं च विप्रयोगः ॥६॥

(नेपथ्ये) [2]दोला-लआहिकुंचन-सरलंगुलि-दीहराहिं चर-णाहिं अपहारिज्जइ वलइअ-कर-जुअलंचिअ-णेउराहरणम् ;
कर-जुअल-निविड-पीडिद-परंत-विणिग्गअंचल-चडुलप्पा छोडि-

च० त०—प्रेतर-मूल-ध्वस्त-वाक्यानाम् एक-वस्तु-वादि-प्रामाणिक-शिष्ट-प्राह्यत्वेनांगीकृतत्वा-दिति दिक्। ददे दत्तः किल, शीतोपचारायेति भावः। "वार्ता-संभाव्ययोः किले"त्य-मरः[3] ॥५॥

निस्सहताम् असह्यत्वम्।

मयि विषये इदं वक्ष्यमाणम्। "द्वितयं द्वयमि"ति द्वि-रूपः। युगपत् एकदा। सोढुं योग्यं सह्यं नैव, क्रमेण सह्यमिति काकुः। द्वितयं किं तदित्यपेक्षायाम् आह जरेति। जरठिता अतिवर्धिताः तीक्ष्णतमीकृता इति यावत्। रवेर्दीधितयः किरणाः यस्मिन्, येन वा। "जरठौ वृद्ध-तरुणावि"ति कपिलः। कालः ग्रीष्मश्च। दयितः प्रियश्चासौ। मृगांकावल्येत्यर्थः। समं सह ॥६॥

विप्रसक्त-ग्रीष्मोपयुक्ततरापराह्ण-प्रमद-वन-सरोवापिकादि-मज्जन-लीलांगमंगेभ्यो भूषण-कौशेयानामपनयनं यथानुभव-जातीयं चमत्करोति—नेपथ्य इति। लतायाः अभि-कुञ्चनेन गमनागमन-कुण्ठनेन। अपहरण-समये कर-द्वयं वलयितं भवति। पीडितेति। कूर्परोपरि दृढ-सक्तेत्यर्थः। अंचलेति। "बाहेचेकाठ" इति महाराष्ट्राः।

प्रा० प्र०—[ संस्कृतच्छाया—नेपथ्ये ] दोला-लताभिकुञ्चन-सरलाङ्गुलि-दीर्घाच्चरणा-दपहार्यते वलयित-कर-युगलाञ्चित-नूपुराभरणम्। कर-युगल-निबिड-पीडित-पर्यन्त-विनिर्गता-

---

1. Repeated in BR. 5. 27, p. 255; only मयि in place of अपि (l. 1). cf. KM. 4. 2.

2—2. V. r. दोलालिआहिं कुंचिद-सरल-दीह-चरणाहिं कढिज्जइ वलइअ-कर-जुअलं-चिअ-णेउराहरणं। कर-जुअल-णिविड-पीडिअ-पेरंत-विणिग्गअ-कुर-कुइप्पा छोडिज्जइ सही-पडिच्छिअ [V. r. पडिच्छिया] कणअ-किंकिणीआ। खुल्लोअर-दर-सिठिलंत-कंचुअ-त्थइद-थण-हराहिंतो अवणिज्जइ उद्ध-करग्ग-कट्टणुव्वेल्लंत-वसनं। 3. AK. III, 3, 235, p. 226.

ज्जइ सरभस-सही-पडिक्खिआ चिअ कणअ-कंचुलिआ । [मणि-] खचिदोअर-सिठिल-थण-कंचुअ-त्थइअ-थण-भराहिंतो अवणिज्जइ उद्ध-करग्ग-कट्ठुणुव्विलं उवरिल्लम्[2] । *उभअ-कर-वलइअंगुली-परिग्गहण-मुक्क-कट्ठ-सट्ठाणो उद्धारिज्जइ थण-मण्डलाहि दरांदोलिओ[1] हारो । परिपाडि-समुण्णमिअ-भुज-लअं परप्फरं करग्गेहिं कड्ढिज्जइ कम-सिठिल-संकड-भाओ कञ्चण-कडओ । कमसो सरंत-संजमण-कुडिलं आमूल-चुम्बिअ-णिअम्बो उरज्जइ णह-परिपाडि-तरलिओ एसो चिउर-पासो[2] । सरलित-तरलंगुलि-विवरंचिअ-

च० त०—तेन चटुलात्मा रमणीय-स्वरूपा। सख्या प्रतीक्षिता प्रतिपालिता। अथवा सौन्दर्यातिशयेन प्रति मुहुः ईक्षितेत्यर्थः। "मुहुः प्रति प्रतिमुहुरि"ति त्रि-रूपः। कंचुलिकेति। विवाहोत्सव-दिवस-चतुष्टय-पर्यन्तं पतिंवरा-तनु-भागे निबद्ध-ग्रन्थि हरित-कौशेय-कार्पासं "कांचोली" इति महाराष्ट्रा व्यवहरन्ति। मणिभिः खचितम् उदरं पुरोभागो यस्य। शिथिलः शिथिलीकृतः यः स्तन-कंचुकः। "चोली" इति महाराष्ट्राः। तस्मिन् स्थगितौ निबिड-लग्नौ यौ स्तनौ तयोर्भरात् परिणाहादतिशयाद्वा। परिग्रहणाद् व्यापारान्मुक्तं कण्ठ एव संस्थानं राज्यं येन। "परिग्रहणं व्यापृतावि"ति "संस्थानं राज्यम्" इति केशव-रुद्रौ। परप्फरमित्यत्र "स्पस्य फ"[3] इति फत्वम्। कराग्रैरंगुलिभिः शिथिलः संकटस्य अर्गलस्य भावः सत्ता यस्मिन् "संकटं भूषणार्गले" इति रत्न-माला। "फिरकी" इति महाराष्ट्राः। 'कडओ' इत्यत्र

प्रा० प्र०—खल-चटुलात्मा मुच्यते सरभस-सखी-प्रतीक्षितैव कनक-कंचुलिका । [मणि]खचितोदर-शिथिल-स्तन-कंचुक-स्थगित-स्तन-भरादपनीयते ऊर्ध्व-कराग्र-कर्षणा-व्यत्यस्तमुत्तरीयम् । उभय-कर-वलयितांगुलि-परिग्रहण-मुक्त-कण्ठ-संस्थानः उद्धार्यते स्तन-मण्डलाद् दरान्दोलितो हारः । परिपाटि-समुन्नमित-भुज-लतं परस्परं कराग्रैः कृष्यते क्रम-शिथिल-संकट-भावः कांचन-कटकः । क्रमशः सरत्-संयमन-कुटिलमामूल-चुंबित-नितम्बो विकीर्यते [नख]परिपाटि-तरलित एव चिकुर-पाशः ।

---

1. V. r. दर-दोलिओ ।
2. V. r. भारो ।
3. PPr. 3. 36. "स्पस्य सर्वत्र स्थितस्य" ।

णिम्मुक्क-कुडिल-विणिवेसो काणिज्जइ उज्जहलाब्भुअ-वअणम्मि अलआण णिउरंबो। कर-कमल-कणिट्ठंगुलि-णह-सिहरुल्लिहिअ-तिवलि-सत्थि-गअं पट्टोरिज्जइ पुणरुत्त-मंगलस्स बलाहि णिअंबं-सुअं। पुढमोवतिण्ण-पिअ-पाणि-संपुड-मंपिड्डिआसु धारासु दर-दत्त-समूह-पहारासु हत्थं मच्छिज्जइ खणद्धं। एत्थ तह

च० त०—"कंकणिआ" इति पाठे क्रमेण "वाला" "कंगणी" इति महाराष्ट्राः। यथोचितं सर्वत्र जातावेक-वचनमूह्यम्। सरन्नुसंयमनं गच्छद्वन्धनं सन् कुटिलं वक्रं यथा तथा। चिकुराणां कुन्तलानां पाशः। "प्राग्भार" इति च पाठः। "पाश-प्राग्भार-संभाराः" इति धनंजयः। "वुचडा" इति महाराष्ट्राः। विवरेषु रन्ध्रेषु अंचितो लग्नः सन् निर्मुक्तः विनिवेशः अधिष्ठान-विशेषो यस्य। अलकानां चूर्ण-कुन्तलानां समूहः। "अलआणे"त्यत्र बिन्दुर्वैकल्पिक इति वाल्मीकि-वृत्ते बिंदोरभावः। उल्लिखितं कण्डूय-शमनाय आरेखितम् यत् त्रिवलि-सक्थि वलि-त्रयोरु, तत्र गतं परिहितमिति यावत्। पुनरुक्तं च तत्। नवोढानां वस्त्र-धारणमेव मंगलं तन्निष्कासनं तु पुनरुक्त-मंगलं ततोऽपि शुभतरं रमणीयं चेति भावः। बलादिति संकोच-सूचनाय। नितंबः पश्चाद्भागः, तत्र स्थितमंशुकमित्यर्थः। नितंबेत्युपलक्षणं जघनमप्यूह्यम्। अंसुअम् इत्यत्र "कोसेयमि"ति "कोसुंभमि"ति च पाठे कौशेयमिति कौसुंभमिति चार्थः। "खम्बाइत्त" इति "भ्रुणा" इति च यथाक्रमं महाराष्ट्राः। प्रियाः दयिताः, स्त्रीजना इत्येवाशयः। तेषां पाणिभिः संपुटेषु, पेटिका-नलिक-शृंगकादिष्वधिकरण इत्यर्थः। "संपुटं देव-संपुष्टे क्रीडांभःशृंगकादिष्वि"ति गोवर्धनः। संपीडितासु ग्रहण-मोचनादिभिः परिखेदितास्वित्यौपचारिकः प्रयोगः। अथवा अपामपि शिवमयत्वेन तद्-ग्रहणादिकमप्यपराधावहं संपीडनमिति भावः। प्रहारासु सतीषु। क्षणार्धमर्ध-क्षणम्। हस्तः अर्प्यते नवोढाभिरिति शेषः। धारा-प्रहार-वारणाय सखेट-मण्डलवदन्तरा धार्यत

प्रा० प्र०—सरलित-तरलांगुलि-विवराञ्चित-निर्मुक्त-कुटिल-विनिवेशः समीक्रियते ऊर्जस्वलाद्भुत-वदने अलकानां निकुरंबः। कर-कमल-कनिष्ठांगुलि-नख-शिखरोल्लिखित-त्रिवलि-सक्थि-गतम् उन्मुच्यते पुनरुक्त-मंगलाय बलान्नितंबांशुकम्। प्रथमावतीर्ण-प्रिय-पाणि-संपुट-संपीडितासु धारासु

मणो हरइ वारविलासिणीणं दइअ-सहिदाणं गिह्मावरह्ण-सोभग्ग-संसणो मज्जणारंभो* ।

च० न०—इति तात्पर्यम् । खणेति कालिदासादीनामिव कवेः प्रमादः, क्षणस्याप्यक्ष्यादि-गणे पठितत्वात् । छणद्धमिति सुपाठः । इह उद्यान-वापिकादिषु । तथा अनिर्वाच्यम् । तहेति दीर्घः पाठश्च । "दीर्घो वे"ति त्रैविक्रमी वृत्तिः । वार-विलासिनीनां क्षिप्त-वाराणां भोगिनी-नामित्यर्थः । "भोगिन्यामपि वारस्त्री"ति जयः । अत एव "वारोऽगराज-स्वसुरि"ति क्षेमेन्द्रः[1] । कविना च वधूनामिति वक्ष्यते । वाराः आदित्यादयः सप्त । दयितैः प्रियैः स्त्री-जनैरित्यर्थः । "दयितं वल्लभं प्रियमि"त्यमरोक्तया प्रिय-दयित-वल्लभ-शब्दा विशेष्य-निघ्नाः सामान्य-पराः । अत एव "दयित-जनेने"ति पष्ठे पद्ये कविनोक्तम् । अपराह्णे सौभाग्यस्य सौख्यस्य शंसनं येन यस्माद्वा । मज्जनस्य स्नानस्यारंभः । तथा मनो हरतीति पूर्वेणान्वयः । एवमेव कवेर्भावः । अन्यथा वार-विलासिनी-शब्दस्य गणिकार्थ-परत्वे सांसारिकेष्वेव संप्रदाय-प्राप्तस्य "कंचुलिया" इति वर्णनस्य महाराष्ट्रानुभव-सिद्धतया तासु तस्य शश-शृंग-प्रायत्वात् । दयित-शब्दस्य च पति-परत्वे पति-पत्नीति गणिकासु व्यवहारापत्तेः ।

प्रा० प्र०—दर-दत्त समूह-प्रहारासु हस्तोऽर्प्यते त्वरार्थम् । इह तथा मनो हरति वार-विलासिनीनां दयित-सहितानां ग्रीष्मापराह्ण-सौभाग्य-शंसनो मज्जनारंभः ॥ अत्र छोड्डिज्ज ×× [णे]उरमित्यत्र "एन्नूपुर"[2] इति एत्वम् । चीअ चेअ अवधारण इति निपातः । "परि-पाटिरनुक्रम" इति "अलकाश्चूर्ण-कुन्तला" इति चामरः । "अस्त्रियां निकुरंबः स्यादि"ति शाश्वतः । णहेत्यत्र 'णक्ख' इति पाठे "सेवादिष्वि"ति सेवादि-गणे पठितत्वाद्द्वित्वम् । मंगलस्सेत्यत्र चतुर्थ्याः षष्ठी[3]-निर्देशः । हत्थमिति हत्थो इत्यर्थः । प्राकृतेषु क्वचित् पुंलिङ्गस्य नपुंसक-लिङ्गत्वमुच्यते । अत एव "आहारमणहियअदि"ति(?) शाकुंतले कालिदासेनोक्तम्[4] । मणो इत्यत्र "अन्त्य-हल"[5] इति पदान्तस्य हलो लोपः ।

---

*(l. 3, p. 190)—* . This portion is not found in the printed eds. of the Viddha-śālabhañjikā.

1. SāhDar., III, illustration of दक्षिण-नायक, p. 98.
2. PPr. I. 26. p, 19. 2.
3. PPr. 6. 64. p. 192.
4. But see AS., NSP. ed., II, 15, p. 55, "आहारो अणहीअदि ।
5. PPr. 4. 6, p. 101.

[1] राजा। (समाकर्ण्य) एवमेवैतत्।

इह विचकिल-चापे सन्दधत् पाटलास्त्रं
त्रि-भुवन-जय-लीला-लालसः कौतुकेन।
दिवस-गमन-केलि-स्नायिनीनां वधूना-
मधिवसति मनोभूर्मानसादङ्गमङ्गम् ॥७॥

च० त०—राज-परत्वमपि न युक्तम्, तस्य मृगांकावल्यामुत्कण्ठिततया मदन-संताप-पीडाधीनत्वात्। किं बहुना राजानं विना राजोपवने गणिका-प्रवेशस्यातिदुष्करत्वाद् वार-विलासिनीनामित्येतद् भोगिनी-वाचकमेवेति दिक्।

एतत् मज्जनम्। एवमीदृशमेव।

तदेव विवृणोति इहेति। इह स्व-चाप-शरीभवद्विचकिल-कुसुम-समृद्धोपवने। विचकिलं मल्लिकैव चापं, तस्मिन् पाटलस्य पुष्पं पाटलं तदेवास्त्रं कर्म, संदधत् संदधानः। जयस्य लीलायां क्रीडायां लालसा महती इच्छा यस्य। "लीला विलास-क्रीडयोरि"ति "द्वयोर्महत्यामिच्छायां लालसे"त्यमर-त्रिकाण्डौ। मनोभूर्मनसिजः। दिवस-गमने दिनान्ते केल्या क्रीडया स्नायिनीनां स्नान-शीलानां वधूनां पूर्वोक्त-भोगिनीनां मानसात् अंगमंगं प्रत्यवयवम् अधिवसति। तथा च केवले मनसि जायमानो मदनो लीला-स्नाने निरावरणतया सुभग-दर्शनीयतमत्वात्तरुणीनां प्रत्यंगे स-विलासं वहिः सज्यं धनुर्वसतीति भावः। "मान-सादं" मान-कार्श्यमिति ध्वनिः ॥७॥

प्रा० प्र०—दिवस-गमन-केलिर्दिनांत-क्रीडा।

---

1. Tanjore MSS. The portion from here to त्वामसौ व्रजतु किन्नर-कण्ठी (v. II, p. 198) is not found in the printed eds. of the विद्ध-शालभञ्जिका। In the last verse, the last three pādas and the introductory portion are given as follows:—राजा। (वयस्याभिः सह दोला-विहारं विभाव्य विदूषकं प्रति) सखे, मां निधाय हृदये स्मर-तप्ता दोलिका-विहरणं स्व-सखीभिः। स्वीकरोति यदि किन्नर-कण्ठी। The last pāda in the MSS. is the same as in the printed eds.

विदूषकः। भो सुणाहि दाव, अन्तरिदो पिअ-कहासु अदिक्कन्त-पओस-वुत्तन्तो। जदो सिविणअ-दंसण-दिअहादो पहुदि देवी पुणो पुणो पसज्जदि[1]। तदणुबंधेण पिङ्गलिआ वि बह्मणी दिणे दिणे मंतेइ

राजा। युज्यते। यदरिष्टमधिरूढा कारवल्ली-वल्लरी, किमुच्यते कटुकत्वं प्रति। न कापि महती वार्ता। किन्तु,

तारान्तःपुरवान् वियत्यपि शशी नो नेव-पालीकृतः
श्रोत-स्वस्त्ययनं कृतो न च मया वैपञ्चिकः पञ्चमः।

च० त०—एवं शाखा-चंक्रमणमारचय्य प्रकृतमनुसरति भो इति। तावदलंकारे। प्रदोषस्य वृत्तान्तः विवाहोत्सवः। प्रिय-कथासु चाटु-गोष्ठीषु अन्तरितः संजातान्तरः, आच्छादित इति यावत्। अलीक-विवाह इति तदपि परिहासाय वदति जदो इति। प्रसज्जति प्रकर्षेण सक्ता भवति, वंचना-मोटनायेति-शेषः। तस्याः देव्याः अनुबन्धेन संबन्धेन। पिंगलिकेति विदूषक-पत्न्या नाम।

"पिचुमन्दः स्यादरिष्टः काक-वल्लभ" इति धन्वन्तरिः। अरिष्ट इति ध्वनिश्च। कटुकत्वं कटुकतां प्रति उद्दिश्य किमुच्यते, अतिशयेन तस्याः कटुकत्वमित्यर्थः। तथा च पिचुमन्दारूढ-कारवल्ली-शलाटव इव देवी-संबन्धि-पिंगलिका-वचनानि नैव सद्भिरंगीकार्याणीति भावः। नन्वस्ति कापि प्रदोषस्य वार्तेत्याशंक्याह नेति। महती आकर्णनेन पूज्या। अस्तु जरत्याः प्रसंगः, सैव मे मनसि वर्तते इत्याह—किं त्विति।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भोः शृणु तावत्, अन्तरितः प्रिय-कथासु अतिक्रान्त-प्रदोष-वृत्तान्तः ॥ अतिक्रान्तश्चासौ प्रदोषश्चेति विवेकः ॥ यतः स्वप्न-दर्शन-दिवसात् प्रभृति देवी पुनः पुनः प्रसज्जति। तदनुबन्धेन पिङ्गलिकापि ब्राह्मणी दिने दिने मन्त्रयते।

अरिष्टः पिचुमन्दः।

---

1. V. r. उवछंददि।

तन्वङ्ग्याः स्मरता दृशौ तत इतस्ते साचि-सञ्चारिते
नो पीतञ्च सविभ्रम-प्रणयिनी-गण्डूष-धारं मधु ॥८॥

विदू। एदे वि कामिणो उम्मत्ता विअ मे पडिभासन्ति। जदो सच्चं[1] दाव सुन्दरीअ[2] थन-णिरीक्खण-गमणादिहिं किं वि विअरिज्जन्ति। ता कहेदु, किं एदं ?

राजा। किमत्र मां पृच्छसि, तत्रभवन्तं रतिपतिं पृच्छ।

च० त०—ताराभिः अन्तःपुरवात स-स्त्रीक इति यावत्। अन्तःपुर-शब्देन स्त्रियो लक्ष्यन्ते। अपिः संभावनायाम्। विपंच्या वीणायाः संबन्धी वैपंचिकः पंचमः स्वर-विशेषः। "निषादर्षभ-गांधार-षड्ज-मध्यम-धैवताः। पंचमश्चेत्यमी सप्त तन्त्री-कण्ठोत्थिताः स्वराः ॥" इति संगीत-चंद्रिकायां भरताचार्याः। नच नैव। श्रोत्रयोः स्वस्त्ययने शुभ-मार्गे कृतः। "स्वस्ति शुभे चे"ति हेमः। इतस्ततः साचि तिर्यक् संचारिते प्रेरिते ते निरुपमे प्रसिद्धे वा। तन्वंग्याः मृगांकावल्याः दृशौ नेत्रे स्मरता चिन्तयता मया स-विभ्रमा स-विलासा चासौ प्रणयिनी देवी तस्याः गण्डूषस्य धारा यस्मिन्। अत्युच्छिष्टमिति यावत्। मधु मद्यं च नो पीतम् "अभावे नह्य नो" इत्यमरः। तथा च, कदाचिद् मदन-बाधातिशयेन "कार्यार्थिनः कुतो गर्व" इति न्याय-मनुसरन् देव्या मंचमधिरूढोऽपि तामेव तरुणीमाकुच-नखमनुस्मरन्नहं तूष्णीको निवसामीति भावः ॥८॥

कामिनः स्त्री-लंपटाः। उन्मत्ताः विभ्रान्त-चित्ताः। आदि-शब्देन संभाषणादिकं विवक्ष्यते।

अत्र अस्मिन् विषये। तत्रभवन्तं पूज्यम्। "पूज्यस्तत्रभवानत्रभवानि"ति नाट्य-पद्धतिः। अत्र ब्रह्मादयोऽपि मुह्यन्ति, स्मर एव ज्ञातेति भावः।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] एतेऽपि कामिन उन्मत्ता इव मे प्रतिभासन्ते। यतः सत्यं तावत् सुन्दर्यास्तन-निरीक्षण-गमनादिभिः किमपि विक्रियन्ते। तस्मात् कथयतु, किमेतत् ? वयस्य इति शेषः।

---

1. V. r. एत्थ। 2. V. r. सुंदरीओ।

यत् पश्यन्ति झटित्यपाङ्ग-सरणि-द्रोणीजुषा चक्षुषा
वल्गन्ति क्रम-कम्पितोभय-भुजं[1] यन्नाम वाम-भ्रुवः ।
भाषन्ते च यदुक्तिभिस्तवकितं वैदग्ध्य-मुद्रात्मभि-
स्तद्देवस्य रसायनं रस-विधिं मन्ये मनोजन्मनः ॥९॥

विदू । भो ताए उण अज्जतणीणा अत्थि काव वत्ता ?*

च० च०—तथापि किंचिद्वदामीत्याशयेनाह यदिति । वामा वक्राः रम्याश्च भ्रुवो यासां ताः । झटिति तत्क्षणम् । अपांगयोः नेत्रांतयोः सरणिः पद्धतिरेव द्रोणी नौस्तद्वद् दैर्घ्यं जुषते सेवते जुट् तेन चक्षुषा यत् पश्यंति । यद्यपि चक्षुषेत्येक-वचन-प्रयोगः कोण-विलोकन-व्यंजकस्तथापि श्रृंगार लावण्य-वर्णनादावेकता-ध्वनि-दोष-परत्वाद् "विपुले चक्षुषी"त्यप्पय्य-दीक्षित-प्रयोगवद्विश्वासेन दयया वा क्षन्तव्यः । एवमेवा-पाङ्ग-सरणीत्यत्र "अपांगात्ते लब्ध्वे"ति[2] भगवत्पाद-वचनानुशासन-न्यायोऽनुसंधेयः । क्रमेति । पर्याय-कंपित-बाहु-द्वयं यथा तथा, गताविति शेषः । यद्वल्गन्ति शोभंते । नाम प्रसिद्धौ । वैदग्ध्येति, चातुर्य-धाटी-रूपाभिः । "मुद्रा धाटी"ति "आत्मा ब्रह्म-रूपादावि"ति अमर-माला-रत्न-माले । उक्तिभिः स्तवकितं स्तवकः कुसुम-गुच्छ-स्तद्वद्बहलीकृतं यथा तथा । यच्च भाषन्ते तद्दर्शनं वल्गनं भाषणमिति च कर्म पृथक् पृथगूह्यम् । देवस्य राज्ञो मनोभवस्य रसानां रागाणाम् अयनं स्थानम् । "श्रृंगारादौ विषे वीर्ये गुणे रागे द्रवे रस" इत्यमरः । अत एव "पुंखित-रसा" इति भावनापुरुषो-त्तमीये । रसानां रस-वादानां सुवर्णादि-क्रियाणामिति यावत्, विधिः शास्त्रमिति वाऽर्थः । "विधिः शास्त्र-विधानयोरि"ति त्रिकाण्डी । मन्ये । जगति सुवर्णादि-क्रियेव वाम-भ्रुवां दृगंचल-दर्शनादीति चमत्कृतिरभिनन्दनीया दुर्लभतरा चेति भावः ॥९॥

तस्याः मृगांकावल्याः । अद्यतनीना अद्य-भवा ।

[ प्रा० प्र०—संस्कृतच्छाया—विदूषकः भोस्तस्याः पुनरद्यतनीनाऽस्ति कापि वार्ता ? ]

---

1. V. r. क्रमकालितोभयभुजं । 2. Ā L, 6.

* This Prakrit passage as well as the following one, not found in the printed eds., have been overlooked by Ghanaśyāma; the Camatkāra-taraṅgiṇī, however, deals with them.

राजा। सखे, अस्ति, कथ्यते। यतो गतस्याह्नः सायं-समये विचक्षणा सत्यमेतदवस्थां निवेदितवती।

विदू। कदरेहिं अक्खरेहिं ?*

राजा। शृणु,

डोला-लीलाः श्वसित-मरुतश्चक्षुषी निर्झराभे
तस्याः शुष्यत्तगर-सुमनःपाण्डरा गण्ड-भित्तिः।
तद्गात्राणां मुहुरिह[1] कियद् ब्रूमहे दुर्बलत्वं
येषामग्रे प्रतिपदुदिता चन्द्र-रेखाऽप्यतन्वी ॥१०॥

च० त०—गतस्याह्नः पूर्वेद्युरित्यर्थः। सायमित्यव्ययम्, सायं चासौ समयः। सायेत्य-विन्दुक-पाठे सायश्चासावित्यूह्यम्। "सायः संध्या पितृ-प्रसूरि"त्येव[2] पाठमंगीकृत्य जयदेव-मल्लिनाथादयो व्याचक्रुः। अत एव "सायोन्मिषत्कुवलये"ति नीलकण्ठः। सत्यामिति च पाठः। "सत्यं तथ्यं त्रिषु तद्वती"त्यमरः।

अक्खरेहिमिति कालिदासादीनामिव कवेः प्रमादः। अक्षरस्य अक्ष्यादि-गण-पठित-त्वात्। अच्छरेहिमिति सु-पाठः।

तयोक्तं पद्य-द्वयमनुवदति डोलेति। तस्याः श्वसित-मरुतः श्वासानिलाः दोलानां लीलाः गमनागमन-रूपा विलासाः क्रिया वा येषु। डोलेति कवेः प्रमादः। "दोला न डोले"ति समय-पद्धतिः। अत एव "दोला-दशन-दण्डेषु ड"[3] इति प्राकृत-व्याकरणे वररुचिः। निर्झरयोः प्रवाहयोः आभा ययोस्ते। "उपमा-प्रभयोराभे"ति नाम-निधानम्। धाराले इति भावः। गण्डयोः कपोलयोः भित्तिः फलकम्। "भित्तिः फलक कुड्ययोरि"ति वामनः। गण्डेति ध्वनिः। शुष्यन्त्यः म्लायन्त्यश्च ताः तगरस्य सुमनसः पुष्पाणि तद्वत्

[ प्रा० प्र०—संस्कृतच्छाया—विदूषकः। कतरैरक्षरैः ? ]

गात्राणाम् अवयवानामिति भावः। ब्रूमह इति कथनमयुक्तम्। अतन्वी स्थूला ॥१०॥

---

* See the previous foot-note.

1. V. r. पुनरिह।

2. अमरकोषः 1. 3. 3. P. 2.

3. PPr. 2. 35,

विदू । तदो तदो ?

राजा । ततश्च,

नागवल्लिरधिरोहतु पूगं रात्रिरेणतिलकेन समेतु ।
त्वाममौ भजतु किन्नर-कण्ठी कार्मुकं वहतु जैत्रमनङ्गः ॥११॥

विदूषकः । विअक्खणा-वअणादो जाणीअदि पाणि-पीडणा पुरदो[1] पाविओ[2] अप्पा ।

च० न०—पाण्डरा शुभ्रा । "तगरः पाण्डु-कुसुम" इति धन्वन्तरिः । इह विरह-सन्तापे । मुहुः पुनः । गात्राणामिति, तस्या इत्यर्थात् सिद्धम् । "अंगम् अवयवो गात्रं वपुरि"त्यमर[3]सिंहेनाभिधानाद् गात्राणामवयव-परत्वमनन्य-गत्या दयनीयः पक्षः । तत् अवाङ्मनसगोचरं दुर्वलत्वम् । "अमांसो दुर्बल" इत्यमरः । कियत् ब्रूमहे ब्रूमः । येषां गात्राणाम् अग्रे पुरः । प्रतिपदि शुक्ल-पक्षस्येति भावः, उदिता चन्द्रस्य रेखा बालाग्र-स्वरूप एकदेश इत्यर्थः । "रेखा श्रेण्येकदेशयो"रिति नानार्थमाला । सा प्रकृत्यैव कृशा, सांप्रतं तु कृशतमा जातेति भावः ॥१०॥

नागेति । पूगं क्रमुम-वृक्षम् । "तिलकश्चित्रकाङ्क्ष्योरि"ति त्रिकाण्डशेषः । समेतु युक्ता भवतु । किंनराणामिव कंठः यस्याः सा मधुरालापिनी, मृगांकावलीनि यावत् । "भजत्वि"ति च पाठः । तावता किमित्याशंक्याह "जैत्रस्तु जेते"त्यमरः । तथा च युवयोर्मेलने धन्विनामग्रगण्यो जगदेक-वीरो दिग्विजयं करोत्विति भावः ॥११॥

प्रापितः, तयेति शेषः ।

प्रा० प्र०—[संस्कृतच्छाया विदूषकः] ततस्ततः ?

एणतिलकश्चन्द्रः ॥११॥

[ संस्कृतच्छाया—विदूषकः ] विचक्षणा-वचनाज्ज्ञायते पाणि-पीडनात् पुरतः प्रापित आत्मा ।

---

1. V. r. पाणि-पीडण-पुव्वं । 2. V. r. दे दाविदो ।
3. V. r. "अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् । गात्रं वपुः" 2. 6. 70 p. 13.

राजा । स च चतुष्पदी-पर्यवसितः श्लोकः प्राभृतीकृतः ।

विदूषकः । ता पसादं कदुअ पढदु पिअ-वअस्सो[1] ।

राजा । (पठति)—

विधत्ते सोल्लेखं कतरदिह नांगं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचन-युगे ।
यदादत्ते दृश्यादखिलमपि भाव-व्यतिकरं
मनोवृत्तिं द्रष्टुः प्रथयति च[2] दृश्यं प्रति जनम्[3] ॥१२॥

च० त०—अन्यदप्यपूर्वमस्तीत्याह स इति । सः अंक-त्रये त्रिपदी-विशिष्टः, सांप्रतं तु चतुर्णां पदानां समाहारः चतुष्पदी तया पर्यवसितः पर्यवसन्नः, श्लोकः, प्राभृतमिति कृतः प्राभृतीकृतः । "प्राभृतं तु प्रदेशनमि"त्यमरः । "सेटी" इति महाराष्ट्राः । पद-शब्दश्चरण-वाचकः ।

पढ इत्यत्र "ठस्य ढ" इति[4] ढत्वम् ।

विधत्त इत्यादि । चरण-त्रयस्यार्थः पूर्वमुक्तः । मन इति । यत् लोचन-युगम् आत्मना द्रष्टुं योग्यः दृश्यः तं जनं नायकं प्रति उद्दिश्य आत्मानं यः पश्यति तस्य द्रष्टुरित्यर्थः, नायकस्येति यावत् । आत्मना आत्मानमित्यनेन लोचन-युगेन पश्यंती नायिका विज्ञेया । मनसः अन्तःकरणस्य वृत्तिं हाव-भावादि-लीला-व्यंजक-शृंगार-रस-रूपां स्थितिं च । "स्थिति-जीवनयोर्वृत्तिरि"ति कपिलः । प्रथयति प्रकटयति । अत्र नायिकया दृश्यः नायकः नायिकाया द्रष्टा च नायक एव, अनया युक्त्या द्रष्टा दृश्यश्चैक एवेति जानद्भिः सूक्ष्म-बुद्धिभिः पूर्वोक्तेन अंक-त्रय-चरण-त्रयार्थेन सह सांप्रतमुक्तस्य चतुर्थ-चरणार्थस्यैक-वाक्यता द्रष्टव्या ॥१२॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] तस्मात् प्रसादं कृत्वा पठतु प्रिय-वयस्यः ।

---

1. Add. r. तं सिलोअं ।　　2. V. r. मनोवृत्तिर्द्रष्टुं मुखरयति ।

3. The first line of this verse occurs in Act I (p. 68), first two lines in Act 2 (p. 103), first three lines in act 3 (p. 166). 4. PPr. 2. 24, p. 43.

किञ्च,

स्वकण्ठ[1]-काण्डात् सुदृशाऽवतार्य[2]
स्वप्ने ऽर्पितो[3] यो मम कन्धरायाम् ।
पुनर्मया ततकुच-सीम्नि मुक्तो
हारः स तु[4] प्राभृतमद्य[5] जातः ॥१३॥

विदूषकः । भो[6] किं चि[7] रहस्सं पुच्छीअसि ।

राजा । कथ्यते ।

न० च०—स्वेति । स्व-कण्ठ एव काण्डो विस-दण्डः, तस्मात् । यः स पुनर्मया तत-कुचयोः सीम्नि "प्रदेशे तु न ना सीमे"ति मेदिनी । मुक्तो हारः । प्राभृतमिति नित्य-नपुंसक-तया निर्देशः । जातः । एतेन परस्परानुरागो व्यज्यते । "मद्य-जात" इति ध्वनिः । तु-कारः पाद-पूरकः । अत्र 'अर्पित' इत्यनेन "हारोऽयं केरल-स्त्री"त्यादि-शुद्ध-विष्कम्भानंतरोक्तम्, 'पुनर्मया मुक्त' इत्यनेन च "सखे न हार-विरहमर्हत्येषे"ति तृतीयांक-पूरणावसरोक्तं संविधानमूह्यम् ॥१३॥

अथ "स्मृतस्योपेक्षानर्हत्वं प्रसंग" इति न्यायात् प्रसंग-संगत्या पृच्छति भो इति ।

प्रा० प्र०—तरुणिमा तारुण्यम् । किमप्यनिर्वाच्यम् । दृश्याञ्जनादिति शेषः । व्यतिकरं प्रकारम् । "संबन्धे च प्रकारे च पुंसि व्यतिकरः स्मृत" इति मेदिनी[8] ॥१२॥

"प्राभृतन्तु प्रदेशनमि"त्यमरः ॥१३॥

[ संस्कृतच्छाया—विदूषकः ] भोः किंचिद्रहस्यं पृच्छ्यसे ।

---

1. V. r. सुकण्ठ ।
2. V. r. सुदृशोऽवतार्य
3. V. r. स्तनार्पितो ।
4. V. r. च ।
5. V. r. मत्त ।
6. Add. r. पिअ-वअस्स
7. V. r. किं पि ; किं वि ।
8. Not found in Medinī. The synonyms of व्यतिकर are given in it as follows:—"अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः" ।

विदूषकः । मिअंकावली-कुवलअमालाणं किं[1] अंतरं ?

राजा । आस्ताम्, पर-कलत्रं हि सा वर्तते ।

विदूषकः । भो[2] पत्थिव[3], अणभिण्णोऽहम् । जेण[4] उण साल-भज्जा[5] अद्ध-भज्जेति[6] भणिदा[7] । ता कहेसु[8] केत्तिअं अंतरं मिअंकावली-कुवलअमालाणं ?

राजा । यावदन्तरं मृगांकावली-कुवलयमालयोः ।

च० त०—किमन्तरं कियान् भेद इति भावः ।

आस्ताम्, एतत् प्रकरणमिति शेषः । सा कुवलय-माला । परस्य मृगांकवर्मणः कलत्रं भार्या वर्तते । भविष्यतीति भावः । एतेन मृगांकावली-मृगांकवर्मणोर्भेदमेव राजा जानाति । अभेदं तु फलोदय-संविधाने क्रमेण ज्ञास्यतीत्यनुसंधेयम् ।

ननु पर-कलत्रमिति मा वादीः, अन्तर-कथने किंचिन्मूलमस्तीत्याह येनेति । येन कारणेन श्यालस्य पत्नी-भ्रातुः मृगांकवर्मण इति यावत् । भार्या । अर्धं च सा भार्या अर्ध-भार्या यस्य श्यालस्तस्येत्यर्थः । 'अर्धं समेंऽशकः" इत्यमरः । भार्येत्येक-देशेन औपचारिकः प्रयोगः । परिहासमात्र-योग्येति भावः । विस्तरस्तु नाथ-चरणैर्वक्ष्यते । तत् तस्मात् कारणात् ।

मृगांकावली चन्द्राणां पंक्तिः । कुवलयानामुत्पलानां माला स्रक् तयोरिति प्रश्नस्यैवोत्तरत्वं बोध्यम् । तथा च लावण्यातिशयेन चक्रवर्तित्व-हेतुतया च मृगांकावल्या एवाधिक्यं सूच्यते ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] मृगांकावली-कुवलयमालयोः किमन्तरम् ?

[ संस्कृतच्छाया—विदूषकः ] भोः पार्थिव, अनभिज्ञोऽहम् । येन पुनः श्याल-भार्या अर्ध-भार्येति भणिता । तस्मात् कथय, कियदन्तरं मृगांकावली-कुवलयमालयोः ?

---

1. V. r. केत्तिअं । 2. V. r. णं । 3. V. r. पत्थिव-व्यवहारे ।
4. V. r. जाणपदो । 5. V. r. सालभज्जं ।
6. V. r. अद्ध-भज्जत्ति । 7. V. r. भणादि । 8. V. r. कधेसु ।

विदूषकः। भो[1] पुणो भणिदेण[2] किं भणिदं होदि ?

राजा। तर्हि दृष्टान्तान्तरेण कथ्यते, यावदन्तरं घनसारा-गुरुसारयोः।

विदूषकः। सुट्ठुदरं[3] जाणीअदि[4]।

राजा। ज्ञास्यते[5]।

लाटी चम्पक-पिञ्जरैरवयवैर्दूर्वा-निभैः कुन्तली[6]
पूर्वा रत्नमयीं[7] बिभर्ति रचनामन्या[8] तु मुक्तामयीम्[9]।
इत्थं द्वे अपि ते विलास-सदने देवस्य चेतोभुवः
प्राच्याः[9] किन्तु नितान्त-निर्जित-जगल्लावण्य-लाभोदयः[10]॥१४

च० त०—भवतीति। मया न ज्ञायते इति भावः।
दृष्टान्तान्तरेण अन्य-दृष्टान्तेन इति यावत्। अगरोः सारश्चन्दनस्य स्थिरांशः।
ज्ञास्यते इतः परं चेति शेषः।
उभे वर्णयति लाटीति। "पिञ्जरः पीत" इति शब्दार्णवः। रचनां प्रसाधन-विधिम्। "साज" इति महाराष्ट्राः। द्वे उभे अपि। ते मृगांकावली-कुवलयमाले। देवस्य मन्मथस्य। विलासानां सदने आलयौ। ननु तारतम्यं कथ्यताम् इत्यपेक्षायामाह। किन्तु अपितु। प्राच्याः मृगांकावल्याः। सौन्दर्य-प्राप्तेरुदयः आविर्भावः। नितान्तं भृशं निर्जितानि जगन्ति येन। एतेन अनितर-साधारण्यं सूचितम्॥ १४॥

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भोः, पुनर्भणितेन किं भणितं भवति।
घन-सारः कर्पूरः।
[ संस्कृतच्छाया—विदूषकः ] सुष्ठुतरं ज्ञायते।
लाटी मृगाङ्कावली। अवयवैरिति उभयत्र उपलक्षितेत्यर्थः। कुन्तली कुवलयमाला।

---

1. V. r. तं एव्व। 2. V.r. भणंतेण। 3. V, r. सुट्ठुतरं।
4. V. r. ण जाणीअदि। 5. V. r. ज्ञाप्यते। 6. V. r. कुन्तलैः।
7. V. r. रत्नमयी। 8. V. r. अन्या। 9. V. r. मुक्तामयी।
9. V, r. प्राच्या। 10. V. r. लाभोदया ; परयं वपुः।

सखे, पुनर्निरूपय, तदनुपपन्नमिव, तामेवेमां यदुतास्मान्[1] देवी परिणाययिष्यति ।

विदूषकः । ण क्खु[2] दिट्ठे अणुववण्णं[3] णाम । (पुरो दर्शयन्) संबंधिणी-चेटीओ[4] दीसंदि आअच्छंतीओ[5] ।

राजा । का पुनस्ते सम्बन्धिनी ?

विदूषकः । देवी[6] ।

राजा । (विहस्य) तदेहि चित्र-शालिकामधितिष्ठावः । ( तथा तिष्ठतः ) ।

( ततः प्रविशन्ति नेपथ्य[7]-पटलक[8]-हस्ताश्चेट्यः । सर्वाः परिक्रामितकेन ) ।

एका । हला कुरंगिए[9] कहिं उण महाराओ पेक्खिदव्वो ।

च० त०—निरूपय आलोचय ।

सम्बन्धिन्याश्चेट्यः ।

नेपथ्यानां वसन-भूषणादीनां पटलकानि । "तवक"[10] इति महाराष्ट्राः । हस्तेषु यासाम् । "परिक्रमस्याभिनयः परिक्रामितकमि"त्यगस्त्यः । परिक्रमः संचारः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] न खलु दृष्टे अनुपपन्नं नाम । संबन्धिनी-चेट्यो दृश्यंते आगच्छन्त्यः ।

[ संस्कृतच्छाया—एका ] हला कुरंगिके, क्व पुनर्महाराजः प्रेक्षितव्यः ।

---

1. V. r. सखे, किं पुनरनुपपन्नमेवेदम्, यदुत मां ।
2. V. r. कुदो ।
3. V. r. अनुववण्णं ।
4. V. r. चेटिओ ।
5. V. r. आअच्छन्तीओ दीसंदि ।
6. This answer and the query have not been noticed in the commentaries.
7. V. r. नेपथ्ये ; no ततः प्रविशन्ति ।
8. V. r. पेटिका ।
9. V. r. तरंगिए ।
10. Moles, p. 841.

द्वितीया । सहि, तरंगिए[1] जहिं आसण्ण-विवाह-कोऊहल[2]-हलहल[3]-प्फुरिदो जणो दीसइ ।

अन्या । अइ सुलक्खणे[4] किं विअ लक्खणं[5] मन्तीअदि[6] । जदो[7] सहस्साणं[8] पाणिं ग्गाहिदस्स[9] को विअ[10] कोऊहल-[11] हलहलओ[12] ।

अपरा । पिअ-वअस्से[13], विअक्खणासि[14] किं णु क्खु अण-भिण्णासि कंदप्प-चरिआणं[15] जं दानीं[16] णवं णवं कोऊहलं[17] कामि-जणे[18] ।

च० त०—लक्षणम् अतिशयस्येति शेषः । मन्त्र्यते कथ्यते । सहस्राणां युवति-सहस्राणाम् । पाणिमिति जातावेक-वचनम् ।

किं नु खल्विति काकुः । किं त्विति च पाठः ।

नवं नवमिति । "नालमेकस्य पर्याप्तमि"ति भावः ।

प्रा० प्र०—[ संस्कृतच्छाया –द्वितीया ] सखि तरंगिके, यत्राऽऽसन्न-विवाह-कौतूहल-हल-हल-स्फुरितो जनो दृश्यते ।

[ संस्कृतच्छाया—अन्या ] अयि, सुलक्षणे, किमिव लक्षणं मन्त्र्यते । यतः सहस्राणां पाणिं ग्राहितस्य क इव कौतूहल-हलहलकः ?

[ संस्कृतच्छाया—अपरा ] प्रिय-वयस्ये, विचक्षणासि, किन्नु खल्वनभिज्ञासि कन्दर्प-चरितानाम् ? यदिदानीं नवं नवं कौतूहलं कामि-जने ।

---

1. V. r. कुरंगिए । 2. V. r. कोदूहल । 3. V. r. no हलहल ।
4. V. r. विश्रक्खणे । 5. Add. r. तरंगिआए । 6. V. r. मंतिदं ।
7. V. r. जो । 8. Add. r. महिसीणं । 9. V. r. पाणिग्गहीतस्स ।
10. V. r. कित्तिओ विअ ; किरको विअ । 11. V. r. कोदूहल ।
12. V. r. कलकलो । 13. सहि । 14. V. r. विअक्खणे ।
15. V. r. चरिदाणं । 16. V. r. no. जं दाणीं । 17. V. r. कोदूहलं ।
18. V. r. णव-कोदूहली कामि-जणो ; णवल-कोदूहली कामि-जणो ।

विचक्षणा[1]। (पुरतोऽवलोक्य[2]) एस भट्टा पंडर-परि-क्खामो[3] पहाअ[4]-पूण्णिमा-चन्दो विअ सणिच्चराणुगओ[5] अज्ज-चाराअण-दुदिओ[6] चित्त-साला-दुवारुद्देसे[7] दीसइ[8]।

कुरं। (उपसृत्य[9]) जेदु[10] भट्टा। देवी विण्णवेदि, आसण्णं विवाह[11]-लग्गं। ता इमं विवाह-णेवच्छ-मंगलं[12] करिअ अधि-ट्ठीअदु[13] विवाह-चउक्किआ[14]।

राजा। यथाह देवी, शान्तम्,[15] यदादिशति देवी।

विदू (आत्मानं निर्दिश्य[16]) [17]संबंधि-जणाणुरूपं[18] भुज्जं किंपि किदं[19] ?

च० त०—पांडुरश्चासौ। मंगलं धारण-रूपम्।
आह वदति। देवीति। तथैव करोमीति भावः।

प्रा० प्र०—[ संस्कृतच्छाया—विचक्षणा ] एष भर्ता पाण्डुर-परिक्षामः प्रभात-पूर्णिमा-चन्द्र इव शनैश्चरानुगत आर्य-चारायण-द्वितीयश्चित्र-शाला-द्वारोद्देशे दृश्यते।

[ संस्कृतच्छाया—कुरं ] जयतु भर्ता। देवी विज्ञापयति, आसन्नं विवाह-लग्नं तस्मादिदं विवाह-नेपथ्य-मंगलं कृत्वाऽधिष्ठीयतां विवाह-चतुष्किका।

[ संस्कृतच्छाया—विदूषकः ] संबन्धि-जनानुरूपं भोज्यं किमपि कृतम् ?

---

1. V. r. तरङ्गिका। 2. V. r. पुरोऽवलोक्य।
3. V. r. पंडुर-परिक्खामंगो। 4. V. r. प्पहाद; पहाद।
5. V. r. सणिच्चराणुगदो। 6. V. r. द्विदीओ; विईओ।
7. V. r. चित्त-सालिआरुद्देसे। 8. V. r. दीसेदि।
9. V. r. समुपसृत्य। 10. V. r. जेदु जेदु।
11. V. r. no विवाह ; विआह। The word विवाह in some MSS. is given as विआह on other occasions as well ; vide infra.
12. V. r. णेवत्थमलं। 13. V. r. अहिट्ठीअदु। 14. V. r. चउत्तरिआ।
15. V. r. no यथाह देवी, शान्तं। 16. V. r. निर्वर्ण्य।
17. Add. r. भो; भोदिओ। 18. V. r. संबंधि-सज्जणाणुरूपं।
19. V, r. सम्बंधिअस्स जणस्स वास-भोज्जं (जणणवास-भोज्जं) किमुत्तरम् ?

सर्वाः । अरं दइस्सामो[1] ।

विदू । किं विअ तं[2] ?

कुरं । जं कंकेलि-तरू[3] दोहले[4] लहेइ[5] । जं वा[6] भअवन् तिणअणो[7] सीसे[8] समुव्वहइ[9] ।

विदू । ( दण्डकाष्ठमुद्यम्य ) दासीओ[10] महाराअ-पिअ-वअस्सं पिंगलिआ-ब्रह्मणी-सिसुत्तण-वल्लह[11]-पंडिअं सिसुअ-दिण्ण-विज्जं चाराअण-ब्रह्मणं[12] अहिक्खिवध[13] । ता इमिणा तुह्मारिस-चेडी-अण-चित्त[14]-कुडिलेण दंड-कट्ठेण भुअग[15]जण-जुगुच्छि-आइं[16] वअणाइं करिस्सं ।

च० त०—कृतमिति प्रश्न-रूपः काकुः ।

अर्ध-चन्द्रं गलहस्तिकाम् । "गचाण्डी"ति महाराष्ट्राः ।

प्रा० प्र०—[ संस्कृतच्छाया—सर्वाः ] अरं दयिष्यामहे । अरं शीघ्रम् ।

[ संस्कृतच्छाया—विदूषकः ] किमिव तत् ?

[ संस्कृतच्छाया—कुरं ] यत् कङ्केलि-तरुर्दोहदे लभते ॥ कङ्केलिरशोकः । "प्रदीप्त-कदम्ब-दोहदेषु दो लः"[17] इति दोहदे दस्य लत्वम् । प्रकृत-दोहदं पाद-ताडनम् ॥ यद्वा भगवांस्त्रि-नयनः शीर्षे समुद्वहति ॥ धुस्तूर-पुष्पमिति परिहासोक्तिः ।

[ संस्कृतच्छाया—विदूषकः ] दास्यः, महाराज-प्रिय-वयस्यं पिङ्गलिका-ब्राह्मणी-शिशुत्व-वल्लभ-पण्डितं शिशुक-दत्त-विद्यं चारायण-ब्राह्मणमधिक्षिपथ । तस्मादमुना युष्मादृश-चेटी-जन-चित्त-कुटिलेन दण्ड-काष्ठेन भुजग-जन-जुगुप्सितानि वदनानि करिष्यामि ।

---

1. V. r. इदं दास्सामो । 2. V. r. no. तं । 3. V. r. तरुणो ।
4. V. r. दोहलअं । 5. V. r. no लहेइ । 6. V. r. जं अ ।
7. V. r. तिलोअणो । 8. V. r. सीस्से । 9. V. r. समुद्वहइ ।
10. Addl. r. आ । 11. V. r. no बह्मणी-वल्लहं ।
12. V. r. ससूत्ताणं ( असत्ताणं ) पढिदद्ध-पादअं महावह्मणं ( बह्मवल्लहं ) ।
13. V. r. अधिक्खिवध । 14. V. r. चित्तवुत्ति । 15. V. r. भुअंग ।
16. जुगुत्सणिज्जाइं ; जुगुत्सिआइं । 17. PPr. 2. 21.

तरं। मरिसेदु मरिसेदु अज्जो। संबंधिओत्ति[4] देवी-विलासिणीओ बक्करं[5] करेन्ति।

अन्या। अलं बक्करेण[6], दुव्वासो अज्ज-चाराअणो।

विदू[7]। (विहस्य[8]) संपदं एव्व सुवासो हुविस्सदि[9]। ता विवाह-महूसवं[10] करेह्म। सुलक्खणे हारलट्ठिए[11] कलअट्ठि[12] वसन्तलए[13] लवंगिए[14] कामकेलि हारकेलि[15] मिअंकप्पहे[16] रहंगि सामलंगि[17] बउलावलि[18] पहुणो अवसर-विअक्खणं[19] करं[20] कंकण-बंधेण विरएध विआह-दिक्खं[21]।

च० त०—दास्य इति सम्बोधनम्। शिशुकेभ्यो दत्ता विद्या येन। शिशुकैर्दत्ता विद्या यस्मै वा। भुजग-जनानां विट-लोकानाम्।

देव्यां विलासिन्यः परिचरण-समर्थ-स्त्रियः। बक्कर-शब्दो देशीयः।

दुर्वासाः मुनि-विशेषः। कोपन इति भावः। दुष्टम् अशोभनं वासो वस्त्रं यस्य।

प्रा० प्र०—[ संस्कृतच्छाया—तर ] मर्षयतु मर्षयत्वार्यः। संबन्धिक इति देवी-विलासिन्यश्चोद्यं कुर्वन्ति।

[ संस्कृतच्छाया—अन्या ] अलं चोद्येन, दुर्वासा आर्य-चारायणः।

[ संस्कृतच्छाया—विदूषकः ] सांप्रतमेव सुवासा भविष्यति। तस्माद् विवाह-महोत्सवं कुर्मः। सुलक्षणे, हारयष्टिके, कलकण्ठि, वसन्तलते लवङ्गिके, कामकेलि,-हार-केलि, मृगांकप्रभे, रथाङ्गि, श्यामलाङ्गि, वकुलावलि, प्रभोरवसर-विचक्षणं करं कंकण-बन्धेन विरचयत विवाह-दीक्षम्। विवाहे दीक्षा यस्य स तथोक्तः।

---

4. Add. r. तुए सह। 5. V. r. मक्करं। 6. V. r. मक्करेण।
7. V.r. तरङ्गिका। 8. V. r. no विहस्य। 9. V. r. सुवासो हुविस्सदि संपदं एव्व।
10. V. r. मह्न ( महूत् ) सवोचिदं। 11. V. r. हारलट्ठि।
12. V. r. कलकंठि। 13. V. r. वसन्तलदे। 14. V. r. मङ्गलिए।
15. V. r. no हारकेलि। 16. V. r. मिअंकलेहे।
17. V. r. no रहंगि and सामलंगि। 18. Add. r. परहुदिए विअक्खणे कप्पलदे।
19. V. r. रस-विअक्खणस्स। 20. V. r. no करं। 21. V. r. दिक्खणं।

(सर्वा उपसृत्य[1] रत्न-वासः[2]-कंकण-कुसुमादिकमुपनयन्ति)।

राजा। नाट्येन परिधत्ते।

विदूषकः। (तदवशिष्टेन समालम्भनादिनात्मानं मण्डयति)।

विच। भोदिओ[3] किं विलम्बेण[4], आरम्भ-रमणिज्जाइं कल्लाणाइं[5] होन्ति। ता एत्थ[6] गाएध[7] णच्चध[8]।

विदूषकः। भो एदाणं मज्झे अहंवि गाइस्सं णच्चिस्सं अ[9]।

राजा। यदभिरुचितं भवते।

( विदूषकेण सह सर्वा नृत्यन्ति गायन्ति च )।

नेपथ्ये। हंहो[10] सुलक्खणा-मिस्साओ,[11] किं विलंबेण[12], आणेध महाराअं[13] सपरिवारा देवी संपत्ता ज्जेव[14]।

च० त०—अवसरेषु दान-क्षात्रादि-समयेषु विचक्षणम्, यदा यथा स्थेयं तदा तथा स्थातुं विचक्षणः समर्थ इत्यर्थः, तं करं हस्तम्।

वासः पट्ट-वस्त्रम् इति यावत्। उपनयंति ध्वनिः। उप समीपे नयन्तीत्यर्थः।

तस्माद् राज-गृहीतात् "समालंभो विलेपनमि"त्यमरः। परिमल-द्रव्यमिति यावत्।

भवत्य इति सम्बोधनम्। आरम्भात् प्रभृति पूर्ति-पर्यन्तं रमणीयानीत्यर्थः।

मिश्रा युक्ताः, सहीओ इति शेषः, सख्य इति सम्बोधनम्।

प्रा० प्र०—[ संस्कृतच्छाया—विच ] भवत्यः, किं विलंबेन, आरंभ-रमणीयानि कल्याणानि भवन्ति, तस्मादत्र गायत नृत्यत।

[ संस्कृतच्छाया—विदूषकः ] भो एतासां मध्ये अहमपि गास्यामि नर्तिष्यामि च।

[ संस्कृतच्छाया—नेपथ्ये ] अहो सुलक्षणा-मिश्राः, किं विलंबेन, आनयत महाराजम्, सपरिवारा देवी संप्राप्तैव। ···मिश्राः, चेट्य इति शेषः।

---

1. V. r. समुपसृत्य। 2. V. r. रक्त-वासः
3. V. r. होदिओ। 4. V. r. विलम्बेध 5. V. r. पअरणाइं।
6. V. r. एव। 7. V. r. no गाएध। 8. V. r. चइ।
9. V. r. च। 10. V. r. भो। 11. V. r. विअक्खणामुहीओ (मिस्साओ)।
12. V. r. बिलंबेध। 13. Add. r. चउत्तरिअं; चउक्किअं। 14. V. r. एव्वत्ति।

तरं। इदो इदो एदु[1] महाराओ। ( सर्वे परिक्रामन्ति )।

(ततः प्रविशति यथानिर्दिष्टा देवी, कृत-वधू[2]-वेशा मृगाङ्कावली कुवलयमाला च )।

देवी। ( अपवार्य ) वच्छे[3] कुवलअमाले, पेच्छ[4] अत्तणो भट्टिणो[5] सिलिट्ठं[6] महिला-वेसं।

( कुवलयमाला तन्मुखी[7] हसति )।

राजा। ( स्वगतम् )

दिवस इवास्मि सतापः सेन्दुर्वदनेन[8] रात्रिवच्चैषा
इदमपि चान्तर-रचितं रक्तांशुकमावयोः सन्ध्या ॥१५॥

च० त०—"मिथोऽपवार्य रहसि जानान्तिकमि"ति नाट्य-पद्धतिः। भर्तुर्मृगाङ्कवर्मण इति देव्या भावः। इयमेव मृगाङ्कावलीति सूक्ष्म-दृग्भिरूह्यम्। "श्लिष्टं रम्यं यथार्थ-योरि"त्यमर-शेषः।

तस्मिन् राज्ञि विषये मुखं यस्याः तन्मुखी तदभिमुखीत्यर्थः।

दिवस इति। वदनेन सेन्दुः एषा कुवलयमाला। रात्रिवत् वर्तत इति शेषः। चकारः पाद-पूरणे। अपि च आवयोः अन्तरे मध्ये रचितं धृतम्। इदं रक्तांशुकम्। "अन्तःपटि" इति महाराष्ट्राः। संध्या संध्या-रूपो रागः॥ १५॥

प्रा० प्र०—[ संस्कृतच्छाया—तर ] इत इत एतु महाराजः।

[ संस्कृतच्छाया—देवी ] अपवार्येति, मिथ इत्यर्थः। वत्से कुवलयमाले, पश्याऽऽत्मनः भर्तुः श्लिष्टं महिला-वेषम्।

---

1. V. r. no एदु। 2. V. r. वधूटी।
3. V. r. वत्से। 4. V. r. पेक्ख। 5. V. r. भत्तुणो।
6. V. r. सुसिद्धं ; सुसिणिद्धं। 7. V. r. अवनत-मुखी।
8. V. r. चन्द्रमुखीत्वेन ; सेन्दु-वदनेन ( ? )।

देवी। अज्जउत्त, उग्घालीअदु[1] मुहं स्सं[2], उदेदु[3] भवण-गब्भे चंदो।

राजा। ( उपविश्य तथा कृत्वा स्वगतम् )।

नयनच्छलेन सुतनोर्वदन-जिते शशिनि कुल-विभोर्बाधात्[4]।
नासा-नाल-निबद्धं स्फुटितमिवेन्दीवरं द्वेधा ॥१६॥

देवी। वत्से, मिअंकावलि, कुण तारा-मेलअं[5], वित्थारअ कुवलअ-संत्थरं[6]।

मृगा। (लज्जावशादितस्ततश्चक्षुषी निधाय चिरमूर्ध्वमवलोकयति )।

च० त०—नयनेति। शशिनि सुतनोः कुवलय-मालायाः वदन-जिते सति, स्व-वंश-प्रभोश्चन्द्रस्य बाधात् "द्वयोर्बाधे"ति मुक्तावली। नासैव नालः तस्मिन् निबद्धं पार्श्व-द्वये नियमेन बद्धम् इन्दीवरं नेत्र-व्याजेन द्वेधा स्फुटितं विदलितमिव। तथा चेन्दोरप्यधिक-सुन्दर-मुखी परस्परोपमान-विलसदिन्दीवराक्षी चेति भावः ॥१६॥

तारा-मेलनं परस्परावलोकनम्।

इतस्ततः पार्श्व-द्वये।

प्रा० प्र०—[ संस्कृतच्छाया—देवी ] आर्यपुत्र, उद्घाटय मुखमस्याः, उदेतु भवन-गर्भे चन्द्रः।

बाधादिति। अयं * * * पाति क्षीर-स्वामिना अमर-व्याख्यायामभिधानात्। वत्स- * * * बोध्यम् ॥१६॥

[ संस्कृतच्छाया—देवी ] वत्से, मृगाङ्कावलि, कुरु तारा-मेलनम्, विस्तारय कुवलय-संस्तरम्।

---

1. V. r. उग्घाडीअदु। 2. V. r. मुहं दे, मुहं से। 3. V. r. से उदेउ।
4. V. r. कुल-विभौ क्रोधात्; कुल-पतौ क्रोधात्।
5. V. r. तारा-दंसणं। 6. V. r. सव्वस्सं; सत्थरं।

राजा । ( विलोक्य[1] स्वगतम् )

भवन-भुवि सृजन्तस्तार-हारावतारं[2]

दिशि दिशि विकिरन्तः केतकानां कुरम्बम्[3] ।

वियति विरचयन्त[4]श्चन्द्रिकां मुग्ध-मुग्धां[5]

बत[6] नयन-निपाताः सुभ्रुवो विभ्रमन्ति ॥१७॥

विदू । ( जनान्तिकेन ) एसा सा[7] कुवलअमाला तुमं[8] तिरिच्छेहिं अच्छीहिं[9] पिबदिव्व[10] ।

राजा । एवमेतत् ।

च० त०—भवनेति । तार-हाराणाम् अवतारमुत्पत्तिम् । केतकी-पत्राणां कुरंबं समूहं "निकुरंबं कुरंबश्चे"ति द्वि-रूपः । नयनयोः निपाताः संचाराः । अत्र नयन-निपाता इत्येतन्न कवेरचातुर्यं "सहस्रमक्ष्णां युगपत् पपाते"ति[11] "मम नयन-निपात" इति कालिदास-नीलकण्ठयोः प्रयोगवत् क्षन्तव्यम् ॥१७॥

प्रा० प्र०—"कुरम्बं सलिलो जाल" इति वामनः । बतेत्याश्चर्यं । अत्र नयन-रुचीनां धावल्य-[वर्णना × स्वादो (?) वर्णनात् प्रमादो] लक्ष्यते ; "प्रसाद-सर्ग-कोपेषु स्वादशो-ऽच्छासितारुणा" इति रूपकादर्शोक्तेः । बतेत्यत्र 'प्रती'ति पाठे प्रति-शब्दस्य इच्छा लक्षणं वाऽर्थः । तथा च प्रति इच्छया लक्षणेन वोपलक्षिताः सुभ्रुवो मृगांकावल्या नयन-निपाता इति बोध्यम् । उद्दिश्येत्यर्थः । "इच्छायां साम्य-लक्षणयोः प्रती"ति हलायुधः । "प्रति प्रतिनिधौ वीप्सा-लक्षणादौ प्रयोगत" इत्यमरश्च । विभ्रमन्ति विलसन्ति ॥१७॥

[ संस्कृतच्छाया—विदूषकः ] एषा सा कुवलयमाला त्वां तिर्यग्भिरक्षिभिः पिबतीव ।

---

1. V. r. no विलोक्य ।　　2. V. r. हारावतारान् ।
3. V. r. कुरुम्बं ; कुटुम्बं ।　4. V. r. च रचयन्त ।　5. V. r. दुग्ध-मुग्धां ।
6. V. r. प्रति ।　　7. V. r. no सा ।
8. V. r. no. तुमं । 9. V. r. दिट्ठिच्छडा-कडक्खेहि । 10. V. r. पिबन्तिव्व ।
11. KS., 3.32.

प्रणाली-दीर्घस्य प्रतिकल[1]मपाङ्गस्य सुहृदः
कटाक्ष-व्याक्षेपाः शिशु-शफर-फाल-प्रतिभुवः ।
दधानाः[2] सर्वस्वं कुसुमधनुषोऽस्मान् प्रति सखे !
नवं नेत्राद्वैतं कुवलयदृशः संदधति च[3] ॥१८॥

किं पुनः पर-कलत्रमेषा[4] ।

विदू । लेहा-सत्तिए[5] तुह एव्व[6] एसा ।

च० त०—प्रणालीति । हे सखे, प्रणाली जल-पद्वी तद्वद्दीर्घस्य अपांगस्य नेत्रान्तस्य दैर्घ्य-विषये सुहृदः । प्रतिकलं पुनः पुनः । मत्स्य-डिंभ-संचारस्य प्रतिभुवः लग्नकाः । "जमीन" इति महाराष्ट्राः । स्मरस्य सर्वस्वं शृंगार-रूपमशेष-द्रव्यं दधानाः । कुवल-याक्ष्याः कुवलयमालायाः कटाक्षाणामपाङ्ग-दर्शनानां व्याक्षेपाः अस्मान प्रति उद्दिश्य नवम् अपूर्वं नेत्राद्वैतम् इतर-वस्तु-निरास-धुरन्धरं, जात्येक-वचनं विवक्षितम्, नेत्राभिधान-वस्तुस्वरूपाद्वैतम् । संदधति संधान-युक्तं कुर्वन्तीत्यर्थः । च-कारः पूरकः । प्रसिद्धि-वाचको हीति पाठो युक्तः । तथा चास्या नेत्र-विलासं विना नान्यत् किंचिदपि मे स्फुरतीति भावः ॥१८॥

परेति परस्य । "तं चे"ति प्राणप्रतिष्ठायां तामित्यर्थः, कुवलयमालामिति यावत् ।

रेखायाः शक्तिः सत्ता तया । "अंग-सौष्ठव-संस्थाने रेखे"ति, "शक्तिः प्राणे च सत्तायामि"ति नागार्जुन-केदारौ । लावण्य-संपदा युवां परस्परं योग्यावेवेति भावः ।

प्रा० प्र०—व्याक्षेपाः हाव-भाव-चेष्टा-व्यञ्जकाः, संकल्प-विकल्प-विशेषा अपीत्यर्थः । "संकल्पादि-विशेषे स्याद्व्याक्षेपो हाव-सूचक" इति त्रिकाण्डी ॥१८॥

पर-कलत्रमिति मृगाङ्कवर्मणः कलत्रमिति भावः । "तश्च पडिच्छिद-वदी देवो निअ-माउल-भाउअस्स किदे" इति द्वितीयाङ्के [7]ऽभिधानात् ।

[संस्कृतच्छाया—विदूषकः] रेखा-शक्त्या तवैवैषा । रेखा अंग-सौष्ठव-संस्थान-विशेषः ।

---

1. V. r. प्रतिपद । 2. V. r. सुवानाः । 3. V. r. संनिदधति ।
4. Add. r. सा । 5. V. r. रोह-गदीए ; सिणेह-गदीए ।
6. V. r. ज्जेव्व । 7. P. 78, l. 6-7.

देवी। ( जनान्तिकं कुवलयमालां प्रति ) पेच्छ[1] अत्तणो भत्तारं अज्जउत्तेण परिणिज्जमाणं[2]। ( प्रकाशं ) [3]संपदं भामरीओ कुणउ[4] महाराओ,[5] दिज्जंदु अज्ज-पज्जलिदे[6] हुदवहम्मि[7] लाजाओ[8]

राजा। ( परिणीयोपविशति )।

प्रविश्य प्रतिहारी। देव, देवी-मादुलस्स चन्दवम्मस्स पहाण-दूदेण सह अज्ज-भाउराअणो दुवारे चिट्ठदि।

राजा। ( देव्या मुख[9]मवलोकयति )।

त० च०—जनान्तिकं रहसि। भर्तारं मृगांकवर्माणमिति भावः। "भ्रामरी तु प्रदक्षिणमि"ति गोवर्धनः।

प्रधानं चासौ दूतः। "प्रधानं प्रमुखे"त्यमरः। एतेन प्रधानस्येत्युक्तिः परास्ता, अत एव "अस्मत्स्वामिने"ति वक्ष्यते। "दूतेन सहार्य-भागुरायण" इति साहचर्य-महिम्ना "कथितमथ तथा मंत्रिणे तस्य चारैरि"ति[10] प्रथमाङ्क-प्रस्तावनानुपद-संविधान-मूह्यम्।

ग्रा० प्र० - [ संस्कृतच्छाया—देवी ] पश्याऽऽत्मनो भर्तारम् आर्यपुत्रेण परिणीयमानम्। अनेन वाक्येन मृगांकवर्मैव मृगांकावलीति सूक्ष्म-दृग्भिर्बोध्यम्। अत एव "एसो जो मिअंकवंमा, सा मिअंकावली"ति[11] तृतीयांके कविनोक्तम्। सांप्रतं भ्रामरीः करोतु महाराजः। भ्रामरी प्रदक्षिणानि। दीयन्तामाज्य-प्रज्वलिते हुतवहे लाजाः।

[ संस्कृतच्छाया—प्रतिहारी ] देव, देवी-मातुलस्य चन्द्रवर्मणः प्रधान-दूतेन सहाऽऽर्य-भागुरायणो द्वारे तिष्ठति।

---

1. V. r. पेच्छ पेच्छ ; पेक्ख।　　2. V. r. परिणिज्जन्तं।
3. Add. r. अज्जउत्त।
4. V. r. दिज्जंदु।　　5. V. r. no महाराओ।
6. V. r. no अज्जपज्जलिदे।　　7. V. r. हुअवहे ; हुअवहेण ; होमिज्जंतु।
8. V. r. लाआ।　　9. V. r. देवीमुखं।　　10. P. 19, v. 9.
10. P. 119, l. 8.

देवी। अविलंबिदं पविसदु[1]।

प्रतीहारी। ( [2]निष्क्रान्तः )।

( ततः प्रविशति भागुरायणो दूतश्च )।

उभौ। जयतु जयतु[3] त्रिलिङ्गाधिपो[4] देवः।

भागु। इतो लाटाधिपतेर्दूतः।

राजा। उपविश[5]। निवेद्यतामपि[6] कुशलं चन्द्रवर्मणः ?

दूतः। देवानुग्रहेण।

देवी। कुशलं [7]मादुलाणीए हारलदाए।

दूतः। अथ किम् ?

देवी। अवि सुमरेदि मे[8] गुरुजणो ?

दूतः। आत्मापि विस्मर्यते ? ( देवीं प्रति ) मातुल-

च० त०—अत्र भागुरायण इत्यादीनि नामानि यथोचितं योग-रूढिभ्यामनुसंधेयानि। वस्तुतस्तु न नाम्नि विप्रतिपत्तिः। अत एव डित्थादि-नामानीति विशेषज्ञाः। अनेनैवा-ऽऽशयेन "प्रतीक-वृत्त्या विहित-चारु-नाम्नो हरदासस्ये"ति[9] प्रस्तावना-गर्भं कविरवादीत्।

लाटाधिपतेश्चन्द्रवर्मणः।

"मे स्मरती"ति "मातुः स्मरती"ति[10]वदिदं द्रष्टव्यम्। अत एव "भ्रातुः स्मरन्नि"ति नाथचरण-व्याकृत-भारत-चम्प्वाम्।

आत्मेति। त एव यूयं यूयमेव त इति भावः। "दिष्ट्या देवादि"ति रभसः।

प्रा० प्र०—[ संस्कृतच्छाया—देवी ] अविलंबितं प्रविशतु

[ संस्कृतच्छाया—देवी ] कुशलं मातुलान्या हारलतायाः।

[ संस्कृतच्छाया—देवी ] अपि स्मरति मे गुरु-जनः।

1. V. r. पवेसेहि। 2. Add. r. तहत्ति। 3. V. r. जयति जयति ; जयतु।
4. V. r. कलिङ्गाधिपः ; धिपतिः। 5. V. r. उपविश्य।
6. V. r. मयि। 7. Add. r. मे। 8. V. r. मं।
9. P. 15, l. 5. 10. Pāṇini, 2.3.56.

पुत्र-जन्मना दिष्ट्या वर्धसे। ( सर्वे हर्षं नाटयन्ति )। संदिष्टं चास्मत्स्वामिना,

निःसूनुना प्राक् परिकल्पिताऽभून्मया मृगाङ्कावलिरेक-पुत्रः[1] ।
पुत्रावकल्पच्छलतोऽथ[2] सेयमानायिता वः सचिवोत्तमेन ॥१९॥

जातः सम्प्रति मे कुलैक-तिलकः पुत्रस्तदेषा त्वया
भव्या कान्तिमती कलासु कुशला केलि-प्रिया नीति-भूः ।
दैवज्ञोदित-चक्रवर्ति-गृहिणी-भावा मृगाङ्कावली
देया कस्यचिदिन्दु-सुन्दर-यशःपूतस्य[3] पृथ्वीपतेः ॥२०॥

च० त०—निरिति। निःसूनुना पुत्र-रहितेन मया प्राक् पूर्वं मृगांकावलिः। "आवलि रावली"ति द्वि-रूपः। परिकल्पिता पुत्रीति शेषः। इयं पुत्र्येव एकः मुख्यश्चासौ पुत्रः सन् स्थित इति शेषः। अथ अनन्तरं सेयं पुत्रीति कल्पिता मृगांकावलिः। पुत्र इति अवकल्पः कल्पना सैव छलं व्याजः तस्माच्छलतः छलाद्धेतोः वः युष्माकं मन्त्रिश्रेष्ठेन आनायिता। तथा च देवी-संबन्ध-स्नेह-संदर्भ-वशादप्रकटित-पुत्रीत्वं यथा तथा पुत्र इत्येव सेयं मंत्रिणा राज-दर्शनायाऽऽनायितेति भावः ॥१९॥

ततः किमित्यपेक्षायामाह जात इति। "भव्यं कुशल-रम्ययोरि"ति सारस्वतः। कलासु विद्यासु। केलयो लीलाः प्रिया यस्याः। नीतेः कामन्दक्याः, भूः

प्रा० प्र०—परिकल्पितेति पुत्रीत्वेनेति भावः। इयम् एक-पुत्रः। ममेत्यध्याहारः। अवकल्पः कल्पना ॥१९॥

कस्यचिदिति, कस्मैचिदिति यावत्। अत एव "कस्य ददाती"ति कादम्बर्याम्।

---

1. V. r. रेवः पुत्रः ; रेव पुत्री। 2. V. r. तश्च।
3. V. r. पूरस्य।

भागु । ( स्वगतम् ) फलितं नो नीति-पादप-लतया धिया ।

विदू । (हस्तमुद्यम्य) भो दिण्णा परिणीदा अ एसा । किं ण पेक्खसि पओट्ठ-[1] सट्ठिद[2]-रत्त-सुत्त[3]-कंकणं[4] पिअवअस्सस्स मिअंकावलीए[5]अ, मण्डिदं दीक्खिदं[6] वरं इत्थिअं अ[7] ।
( सर्वे विस्मयन्ते[8] ) ।

देवी । ( जनान्तिकम् ) पेक्ख देव्व-दुव्विलसिदाइं[9] । जं मए केलि-क्कमेण[10] अलिअं परिकप्पिदं[11] तं सच्चत्तणेण परिणदं । भोदु एव्वं दाव । ( प्रकाशम् ) मादुल-सन्देसमंतरेण वि मए परिणाविदा एव्व एसा ।

च० त०—स्थानम् । दैवज्ञैः ज्योतिर्विद्भिः उदित उक्तः चक्रवर्ति-गृहिणी-भावः यस्याः सा । एषा यस्य भार्या स चक्रवर्ती भविष्यतीति भावः ॥२०॥

नो इत्येकाक्षरे ध्वनिः । सट्ठिलोये द्रविड-भाषया परिहासः ।

प्रकोष्ठे स्थितं च तत् । "प्रकोष्ठस्तस्य चाप्यधः" इत्यमरः । "वामं प्रकोष्ठेऽर्पिते"ति कालिदासः ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भो दत्ता परिणीता चैषा । किं न पश्यसि, प्रकोष्ठ-संस्थित-रक्त-सूत्र-कंकणं प्रिय-वयस्यस्य मृगांकावल्याश्च । मण्डितं दीक्षितं वरं स्त्रियञ्च । मण्डितं दीक्षितञ्चेति स्त्रीपक्षे[ऽपि] योज्यम् । इत्थिअमिति निर्देशः स्त्रीत्व-प्रकटनाय कृत इति बोध्यम् । वरं इत्थिअं अ किं ण पेक्खसीत्युभयत्र क्रियान्वयः ।

[ संस्कृतच्छाया—देवी ] पश्य देव-दुर्विलसितानि । यन्मया केलि-क्रमेणालीकं परिकल्पितं तत् सत्यत्वेन परिणतम् । भवत्वेवं तावत् । मातुल-सन्देशमन्तरेणापि मया परिणायितैवैषा ।

---

1. V. r. पओट्ठे ; पओठे ।
2. V. r. दर ।
3. V. r. मुक्क ।
4. Add. r. करं ।
5. V. r. मीअंकावलो ।
6. V. r. किदं ।
7. V. r. वरइत्तिअं ।
8. V. r. विस्मयन्ति ।
9. V. r. दुल्ललिदाइं ।
10. V. r. किलंतणेण ; कम्मत्तणेण ।
11. V. r. पडिकप्पिदं ।

दूतः। देवि, भवादृशीनां बुद्धयो यदृच्छयापि प्रवृत्ताः कार्यमनुरुन्धानाः परिणमन्ति।

विदू। (जनान्तिकेन) भो, देवी एव्व पुरो ववसिदा[1]।

राजा। तथैव। अनुगुणं हि दैवं सर्वस्मै स्वस्ति करोति।

देवी। ( जनान्तिकेन ) हला अह्मे कज्ज-बाहिरिल्लीओ[2], एदाणं उण साणुबंधाणं रस[3]-पपंचो[4]।

मेखला। जधा एव्व देवीए महानुभावत्तणं अंगीकिदं तह एव्व णिव्वाहं करीअदु[5]। किं गदे सलिले सेतु-बंधेण? किं वा वुत्ते[6] विआहे णक्खत्त-परिक्खाए?

च० न०—यदृच्छया सन्देह-भावेनापि। अनुरुन्धाना अनुसरन्त्यः।

"प्रथमं पुर" इति समासः। व्यवसिता उद्युक्ता।

स्वस्ति क्षेमम्।

एतयोः राज-विदूषकयोः। रसानां शृंगार-गोष्ठीनां प्रपंचो विस्तारः।

वृत्ते अतीते। "गतं तु गतमेव ही"ति भावः।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] भो देव्येव पुरो व्यवसिता।

[ संस्कृतच्छाया—देवी ] हला, वयं कार्य-बाह्याः, एतयोः पुनः सानुबन्धयो रस-प्रपञ्चः।

बाहिरिल्लीओ इति देशीयः शब्दः।

[ संस्कृतच्छाया—मेखला ] यथैव देव्या महानुभावत्वमङ्गीकृतं तथैव निर्वाहः क्रियताम्। निर्वाह इति, आरब्ध-कार्य-पार-गमनमिति यावत्। किं गते सलिले सेतु-बन्धेन। किं वा वृत्ते विवाहे नक्षत्र-परीक्षया।

---

1. V. r. देवोए पच्चंगिरा पडिदा ; देवीए पच्चलंका पडिदा ; देवी एसा पच्छात्तावे पडिदा।

2. V. r. रित्तीओ ; रिदीए ; add. r. भामिदाओ। 3. V. r. एस।

4. V. r. पबंधो। 5. V. r. णिव्वाहीअदु। 6. V. r. गदे।

विदू। अंहो[1] अमच्च-चूडामणे, अहिणव-चाणक्क, भअवं[2] भाउराअण, एसा वि कुवलअमाला पिअ-वअस्सस्स एव्व, जदो महामुणिणो[3] एव्वं भणंति[4]—

भज्जा दासोअ पुत्तोअ णिद्धणा सअला वि ते।
जं दे[5] समभिगच्छन्ति[6] जस्स दे[7] तस्स तं धणं ॥२१॥

दूतः। अहो! स्मृति-वैशद्यं[8] नर्म-सचिवस्य चारायणस्य।

भागु। यथाह चारायणः। किं न्वनेनैव[9] कङ्कणादिना[10] देवी[11] परिणाययत्येनामपि[12]।

च० त०—"चाणक्यो नीति-पारग" इति स्मरणात्। एवं वक्ष्यमाण-प्रकारेण। भार्येति नितरां धनं येषां ते निर्धनाः अधिक-धना इति यावत्। निर्गत-धनाश्च ये यस्य देशम् अभिगच्छन्ति ते सकला अपि। तस्य राज्ञः। तत् प्रसिद्धं शास्त्रोक्तं वा धनं धनवद् रक्षणीया इत्यर्थः। "तमि"त्यत्र "णमि"ति पाठे नन्वित्यर्थः। "ननु निश्चय" इति जयः। तथा च प्रकृते कन्यायाः परकीयार्थतया चिराद्रक्षिता कुवलय-माला न्यायतो वयस्यस्यैवेति भावः। च एकः पूरणे ॥२१॥

नर्म-सचिवस्य परिहास-सहायस्य। स्मृतिषु वैशद्यं पाण्डित्यम्। "सचिवस्तु सहाये चे"ति "विशदौ पट-पण्डिताव"ति रुद्राच्युतौ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] अंहो अमात्य-चूडामणे, अभिनव-चाणक्य, भगवन् भागुरायण, एषापि कुवलय-माला वयस्यस्यैव। यतो महामुनय एवं भणन्ति,

भार्या दासश्च पुत्रश्च निर्धनाः सकला अपि ते।
यं ते समभिगच्छन्ति[13] यस्य ते तस्य तद्धनम् ॥

1. V. r. भो। 2. V. r. अहिणव-चाणक्को भवं। 3. V. r. मुणिणोवि। 4, V. r. मंतयंति। 5. V. r. ते। 6. V. r. समधि। 7. V .r. ते। 8. V. r. वैशारद्यं; add .r. महाराज। 9. V. r. पुनरनेनैव। 10. V. r. कङ्कणेन। 11. V. r. देवि। 12. V. r. परिणाययैनामपि; परिणापयैनामपि। 13. V. r. Camatkāra-taraṅgiṇī—"यं देशमभिगच्छंति"।

विदू । जह समत्थेदि महामच्चो[1] । (कुवलय-मालाया हस्तं गृहीत्वा राज-हस्ते विनिवेश्य) एषा[2] सालभञ्जा अद्धभज्जत्ति वुज्झदि[3] भवदो उण सअल-भज्जा संवुत्ता । (सर्वे हसन्ति) ।

देवी । (सविलक्षं स्मयते) ।

विदू । (चेटीः प्रति) भोदीओ ! णच्चध,[4] गाएध अहं पि नच्चिस्सं गाइस्सं[5] । जदो विआहे संपदं सवुत्तं[6] । (तथा कुर्वन्ति) ।

च० त०—अर्ध-भार्येति । लौकिक-व्यवहार-बलाज्जन-समीपे परिहास-मात्र-करणेन हेतुना अर्ध-भार्यात्व-व्यपदेशः । सकल-भार्येति, दैव-योगात् पाणि-ग्रहणस्यैव वृत्ततया सुखानुभवाधिष्ठानत्वात् सकल-भार्यात्व-व्यपदेशः । पूर्ण-भार्या जातेति भावः । "सकलाखण्ड-पूर्णादी"त्यमरः । अथ नाथ-चरणाः स्याल-भार्यात्वमर्ध-भार्यात्वं च लौकिक-वैदिक-प्रमाणाभ्यामेव स्पष्टयंति "स्यालाः स्युरिति । स्याल-भार्यायाः अर्ध-भार्यात्वं युक्तमिती"ति । भवत्-परिहास्य-स्याल-मृगांकवर्मार्ध-शरीरत्वात् कुवलय-माला भवतोऽर्धभार्या, संप्रति सकल-भार्या संवृत्तेति पर्यवसन्नोऽर्थः । सकल-भार्येति ध्वनिः । मातुल-सुतेत्यादि(?) । यथा देवदत्तस्य मातृभगिन्याः पुत्रीपुत्रस्तस्य भगिनीभ्राता, तथा मातृ-भ्रातुर्मातुलस्यापि, उदर-बन्धुतायाः समानत्वेन अविशेषादित्यौत्तराहाणां भाव इति दिक् ।

प्रा० प्र०—[ संस्कृतच्छाया—विदूषकः ] यथा समर्थयते महामात्यः । एषा स्याल-भार्या अर्धभार्येति बुध्यते, भवतः पुनः सकल-भार्या संवृत्ता । "स्यालाः स्युर्भ्रातरः पत्न्या" इत्यमरः । मृगांक-वर्मणः स्यालत्व-विशेषणमिति परिहासोक्तिः । अर्ध-भार्येति "अर्धो वा एष आत्मनः यत् पत्नी"ति श्रुतेः परिहास्य-स्याल-भार्याया अर्धभार्यात्वं युक्तमिति भावः ।

[ संस्कृतच्छाया—विदूषकः ] भवत्यो नृत्यत गायत, अहमपि नर्तिष्यामि गास्यामि च, यतो विवाहे सांप्रतं संवृत्तम् ॥ विवाह इत्यर्थः ।

---

1. V. r. जहा ; "जह समत्थेदि महामच्चो" preceded by "देवी" ।
2. V. r. भो जाणवदेण ; भो जणवदो ।
3. V. r. उच्चदि ।
4. V. r. गाएध णच्चध ; गाअह णच्चह ।
5. V. r. गाइस्सं णच्चिस्सं ।
6. V. r. विआह-संपुडो वुत्तोत्ति ।

मृगा। ( अपवार्य सहर्षम्[1] ) [2]कुवलअमाले ! परिरभसु[3] मं कलत्तं भविअ सवत्ती संवुत्ता[4]।

भागु। (दक्षिणाक्षि-स्पन्दं सूचयित्वा जनान्तिकेन) न जाने किं पुनर्हर्ष[5]-कारणम्

प्रविश्य—प्रतीहारी। देव ! वच्छाहिव[6] सेणावदिणो आअदो कुरंगओ लेह-हत्थओ दुआरे चिट्ठइ।

भागु। प्रवेश्यताम्[7]।

प्रति। तथा[8] ( निष्क्रान्ता )।

ततः प्रविशति कुरङ्गकः। ( प्रणम्य ) जेदु[9] भट्टा। ( लेखं प्रक्षिपति )।

भागु। गृहीत्वा वाचयति—

च० त०—अपवार्य रहसि। कलत्रमिति पूर्वं मृगांक-वर्मेति मम अलीक-नाम-दशायामिति भावः।

वत्साधिपेति राजानं प्रति संबोधनम्। वत्सा नाम देशाः।

प्रा० प्र०—[ संस्कृतच्छाया—मृगाङ्कावली ] अयि कुवलय-माले ! परिरंभस्व मां, कलत्रं भूत्वा सपत्नी संवृत्ता।

[ संस्कृतच्छाया—प्रतीहारी ] देव वत्साधिप, सेनापतेरागतः कुरंगको लेख-हस्तो द्वारे तिष्ठति।

[संस्कृतच्छाया—प्रति ] तथा।

[ संस्कृतच्छाया—कुरङ्गकः ] जयतु भर्ता।

---

1. V. r. सेर्ष्येव। 2. V. r. add. r. एहि। 3. V. r. परिरभस्सु।
4. V. r. संवुत्तासि। 5. V. r. पुनरन्यदपि हर्षं।
6. V. r. सिरिवत्साहिहेअ ; सिरिवत्साहिह। 7. V. r. प्रवेशय तम्।
8. V. r. जेदु जेदु। 9. V. r. no तथा।

स्वस्ति श्रीमत्त्रिपुर्यां[1] तुहिन-करसुता-वीचि-वाचालितायां

देवं केयूरवर्षं[2] विनय-नत-शिराः सर्व-सेनाधिनाथः ।

श्रीवत्सो वात्सगुल्मिर्मु[3]रज-जनवधू-लोचनैरर्च्यमाने[4]

पाद-द्वन्द्वारविन्दे प्रणमति रचयन्नञ्जलिं मूर्ध्नि भक्त्या ॥२१॥

श्रेयोऽन्यत् कार्यं च लिख्यते—खलचुरि[5]-कुलैक[6]-तिलकस्य[7] प्रसादेन, भागुरायणस्य मति-वैशद्येन मादृशां च पदातिलवानामादेश-निर्वहणेन प्राची-प्रतीच्युदीची-दिग्विलग्ने न[8] सर्व एव राजानश्चण्ड-वृत्तयो दण्डोपनताः स्थिताः. केवलमवाचीक्षितिपतयो दृप्यन्ति[9] स्म । तत्रापि विनिवेद्यते । तत्कुल्यापहृत-राज्यः

च० त०—स्वस्तीति आरंभे मङ्गलम् । श्रीमती चासौ "त्रिपुरी चौज्जयिन्यपी"ति नन्दी ।

श्रीमत्त्रिपुर्यामित्यव्यस्तः प्रयोगः "सर्व-शैला"[1] इति कालिदासस्येव श्रुतव्यः । "व्यस्तं विशेषणं चार्वि"ति कवीनां समयात् । वत्सगुल्मस्यापत्यं वात्सगुल्मिः, श्रीवत्सो नाम । "जनो लोक-समूहयोरि"ति धनंजयः । पादयोर्द्वन्द्वं युगलमेवारविन्दं तस्मिन् । केयूर-वर्षं प्रणमति ॥

श्रेयः श्रेष्ठम् । श्रेयोऽन्यदित्येक-पद-परत्वे ध्वनि-दोषात् कवेरचातुर्यम् । चण्ड-वृत्तयः उद्धत-स्थितयः । दण्डे शिक्षायाम् उपनता उपनम्राः । अवाच्याः दक्षिण-दिशः ।

प्रा० प्र०—तुहिन-कर-सुता नर्मदा । मुरजाः मुरज-देशस्थाः राजानः । खलचुरिरिति तद्वंशीयं नाम । आदेशः शासनम् । कुल्यः कुलभवः ।

---

1. V. r. श्रीमन्त्रिपुर्यां । 2. V. r कर्पूरवर्षं ।
3. V. r- वत्सलत्वान्मु । 4. V. r. अर्च्यमानः । 5. V. r. करचुलि ।
6. V. r. No. कुलैक । 7 Add. r. पार्थिवस्य तत्र ।
8. V. r. दिग्विभागे । 9 V. r. दृश्यन्ते ।

कुन्तलाधिपतिर्वीरपालो नाम[1] देवं शरणमागतो देवादेशाच्च तं पुरस्कृत्य वयं पयोष्णी-परिसरे[2] समावासिताः । तत्र[3] च

कार्णाटो युद्ध-नाट्ये[4] चतुरतर-मतिः सिंहलः सिंहकर्मा
पाण्ड्यश्चण्डासि-यष्टिर्मलयन-रपतिः[5] कार्मुक-प्रौढ-बाहुः ।
आन्ध्रो नीरन्ध्र-मारः समर-भुवि परः[6] कुन्तलः कुन्तशाली[7]
किं चान्यत्[8] कोङ्कणाद्या अपि नरपतयः
संयताः[9] सङ्घ-वृत्तिम् ॥२२॥

अत्रान्तरे तैः सहास्मदीयानामपि महान् संरम्भः प्रवृत्तः[10] ।

राजा । समर-भुवि[11] निसर्गोद्भूटा एव कण्टकाः[12] ।

च० त०—दृप्यंतिस्म गर्विता बभूवुः । तत्र तेषु विषयेऽपि । कुल्याः ज्ञातिः । परिसरे समीपे । केऽपि राजानः समावासिताः स्थापिताः । तत्र तेषां मध्ये ।

कार्णाट इति । कानडा "अंगम" इति महाराष्ट्राः । सिंहल-देशाधिपः मलयाद्रि-स्थित-नृपः । आन्ध्रो गोलकुण्ड-वासी । नीरन्ध्रः सान्द्रः सारो बलं यस्य । परः श्रेष्ठः । कुन्तः प्रासः । "बची" इति महाराष्ट्राः । नरपति-शब्दस्य पुनरुक्तिः । संघ-वृत्तिं समुदय-स्थितिं संयताः संकेतेन प्राप्ताः । "संकेतेऽपि च संयम" इति नानार्थ-माला ॥२२॥

प्रा० प्र०—संघ-वृत्तिं संयताः एकी भूता इति यावत् । कण्टकाः क्षुद्र-शत्रवः ।

---

1. V. r. No नाम ।
2. V. r. तीरे ।
3. V. r. तदा ।
4. V. r. तन्त्रे ।
5. V. r. मुरल-परिवृढः ।
6. V. r. सुरः ।
7. V. r. कुन्तलेशः ।
8. V. r. किं चान्ये ।
9. V. r. संगताः, संश्रिताः ।
10. V. r. बलानां समर-संमर्दो वृत्तः ।
11. V. r. कर्मणि ।
12. V. r. कार्णाटाः ।

भागु। वाचयति। तत्र च

प्रेयान् मे दन्तिदन्तप्रवसदसुरयं वल्लभो मे विपक्षः
कुन्तप्रोतोऽपि योऽयं सरति मम रुचिस्ताण्डवी यः कबन्धः।
अत्रास्मत्प्रेम बद्ध-भ्रुकुटि-मुखमिदं यस्य लूनेऽपि कण्ठे
युद्धे देवाङ्गनानामिति वर-वरणे न श्रुताः केन वाचः ॥२३॥

किं च बहुना[1] तान्वि[2]जित्यास्माभिः स्वराज्ये वीरपालोऽभिषिक्तः। शेषः[3] कुरंगक-मुखादेवावगन्तव्यः[4]।

कुर। देव पट्टए घट्टस्स वि मे मुहे अत्थि ण वाणी[5]।

राजा। लेख-मुखा एव लेखवाहा भवन्ति।

भागु। तदधुना

च० त०—प्रेयानिति। दंतेन दंत-प्रहारेण प्रवसन्तो गच्छन्तः असवः प्राणाः यस्य। अयं प्रेयान प्रियतमः। कुन्तः प्रोतः स्यूतो यस्मिन। विपक्षः शत्रुः। यः सरति गच्छति अयं मम वल्लभः। अत्र अस्मिन मम-रुचिः प्रीतिः। कुत्रेत्याकांक्षायामाह यः कबन्धः ताण्डवं नटनमस्तीति ताण्डवी। अत्रेत्यर्थः। युद्धे कण्ठे लूनेसत्यपि। इति एवं वराणां युद्ध-हत-नूतन-सुराणां वरणे देवांगनानां वाचः। केन न श्रुताः, सर्वैः श्रुता इत्यर्थः ॥२३॥

प्रा० प्र०—कुन्तः प्रासः। "कबन्धोऽस्त्री क्रिया-युक्तमपमूर्ध-कलेवरमि"त्यमरः।

[ संस्कृतच्छाया—कुरङ्गकः ] देव, पट्टके घृष्टस्यापि मे मुखेऽस्ति न वाणी ॥
पट्टकं मरीच्यादि-पेषण-साधनीभूता चतुरस्र-शिला। "पाटे"ति महाराष्ट्राः।

---

1. V. r. किं बहुलिखितेन। 2. V. r. तानव। 3. V. r. शेषं।
4. V. r. गन्तव्यम्। 5. V. r. भट्टा पडहस्स विअ मे मुहं अत्थि ण उण वाणी।

आ गंगा-पात-पूत-प्लुत-नलिन-तलात्[1] पूर्वत[2]स्ताम्रपर्ण्या
पूतादा दाक्षिणात्यात्[3] तुहिनकर-सुता-वल्लभादा प्रतीचः ।
नृत्यच्चण्डीश-शुण्डा[4]च्युत-विबुधनदी-नन्दितादा च देवः[5]
क्षीराम्भोधेरुदीचः खलचुरि-[6]तिलको वर्तते चक्रवर्ती ॥२४॥
(राजानं प्रत्यञ्जलिं बद्ध्वा) किं ते भूयः प्रियमुपहरामि[7] ।
राजा । अतः परमपि प्रियमस्ति ?

च० त०—आ इति । "आ[8] ईषदर्थेऽभिव्याप्तौ सीमार्थे" इत्यमरः । गंगायाः पातेन पतनेन पूतं पवित्रं प्लुत-नलिनं वल्गित-कमलं तलं प्रदेशो यस्मिन । तस्मात् पूर्वतः पूर्वाख्यात क्षीरांभोधेः । ताम्रपर्ण्या पूतात् आ दाक्षिणात्याद् दक्षिणदिग्-भवात क्षीराब्धेः । तुहिनकर-सुतायाः नर्मदायाः वल्लभात प्रियात् आ प्रतीचः पश्चि-माख्यात क्षीरांभोधेः । विबुधनद्या मन्दाकिन्या नन्दितात स्व-संबन्धेन तोषितात् । उदीचः उत्तराख्यात आ च क्षीर-समुद्रात खलचुरि-तिलकः श्रेष्ठः देवः राजा । चक्रवर्ती वर्तते । अत्र क्षीर-सागरस्यैकत्वेऽपि पूर्वादि-भेद-कथनं दिग्गुणादि-कृतमित्यनुसंधे-यम् । खलचुरि-तिलक इत्येतद्भाषान्वितमपि शिव-मतेऽप्यप्पय्य-दीक्षितेन (?) "श्रीमान-प्पय्य-दीक्षितो धन्यः" "शिंगमनायको" "निजाम-धरणीपाल"[9] इत्यादिवदुररीकरणी-यम् ॥२४॥

अतः वक्ष्यमाणात् परम् अन्यत् प्रियमस्तीति काकुः । नास्तीत्यर्थः ।

---

1. V. r. प्लुत-पुलिन-तलात् ; तटात् । 2. V. r. पर्वतात् ।
3. V. r. आपूर्वाद्दाक्षिणात्यात् ; पूर्णादा दाक्षिणात्यात् । 4. V. r. चूडा ।
5. V. r. तावदेव । 6. V. r. करचुलि । 7. करोमि ।
8. V.r. "आमीषदर्थे" etc. III, 3, 240, p 223; the reading is आङ् in all the editions of AK.
9. V. 121 of the Rasa-mañjarī of Bhānudatta—तत् किं राजपथे निजाम-धरणीपालोऽयमालोकितः, p. 190 of Benares edition, 1929.

देवी कोप-कषायितं न[1] गमिता लब्धा मृगाङ्कावली
प्राग् गूढापि[2]मयाद्य[3]मा कुलपतेः[4] पुत्री च पाणीकृता[5] ।
युष्मन्नीति-बलेन[6] तस्य च महान्सेनापतेर्विक्रमः
संजाता मम चक्रवर्ति-पदवी किन्नाम यत् प्रार्थये[7] ॥२५॥

तथापीदमस्तु ( भरत-वाक्यं[8] )

वामाङ्गं पृथुल-स्तन-स्तवकितं यावद्भवानीपते-
र्लक्ष्मी-कण्ठ-परि[9]ग्रह-व्यसनिता यावच्च दोष्णां हरेः ।

च० न०—देवीति । कोपेन कषायितं कालुष्यम् । गूढा अप्रकाशाऽपि । लब्धा । पुत्री कुवलय-माला च । युष्मदिति पूजायाम् । सेनापतेः श्रीवत्सस्य । ["पदवी] पद-मार्गयोरि"ति रत्नमाला । संजाता सम्यक् निष्पन्नं यथा तथा जाता । एवं सति किं वास्ति अन्यदिति शेषः । यत् प्रार्थये । अत्र यच्छब्दस्योत्तर-वाक्ये वर्तमानतया पूर्व-वाक्ये न तच्छब्द-नियमः । अत एव "वाभाति यत्कृतिरि"ति नाथ-चरण-व्याख्यान-भोज-चम्प्वाम् ॥२५॥

भरतेति । येन नान्दी कृता तस्य वाक्यमिदम्, "समारंभे च पूर्णौ च नियता भरतोक्तय" इति रूपकादर्शोक्तेः ।

स्वाभिमतं प्रार्थयते वामेति । यावत् [10]"भवानीपतेरि"त्यस्य भवानी-पत्नी-पतेरित्यर्थः । तदेव कवेश्चातुर्यं "देव मृडानीपति" "स्थाने भवानीपतेरि"त्यादिवदङ्गीकरणीयम् । वामं च तदंगं पृथुलेन विपुलेन स्तनेन स्तवकितं संजात-स्तवकम् । यावत् हरेर्विष्णोः दोष्णां लक्ष्मी-कण्ठस्य परिग्रहे आलिंगने । "अङ्कपालो परिग्रह"

प्रा० प्र०—दोष्णां भुजानां । प्राक् झटितीत्यर्थः । चक्रवर्ती सार्वभौमः ।

---

1. V. r. कषायिता नु ।　2. V. r. प्रागूढापि ।　3. V. r. ममाद्य ।
4. V. r. कुन्तलपतेः ।　5. V. r. कलत्रीकृता ।
6. V. r. वशेन ।　7. V. r. प्रार्थ्यते ।
8. V. r. no भरत-वाक्यं ।　9. ग्रह ।
10. But the compound "भवानीपतिः" is quite common.

यावच्च प्रतिमा-प्रसारण-विधि-व्यग्रौ[1]करौ ब्रह्मणः[2]
स्थेयासुः श्रुति-शुक्ति-लेह्य-मधुरा[3]स्तावत् सतां सूक्तयः ॥२६॥

( इति निष्क्रान्ताः सर्वे )

इति श्रीमद्बाल-कवि-राजशेखर-विरचितायां विद्ध-
शालभञ्जिका-नाटिकायां चतुर्थोऽङ्कः ॥

च० त०—इति धनंजयः। व्यमनितेति ध्वनिः। रसिकतेति पाठः कल्प्यः। च पूरणे। यावच्च वेधसो ब्रह्मणः करौ "वेधा द्विभुजश्चतुरानन" इति संसारावर्तः। प्रतिमा-प्रसारणस्य विधौ विधाने व्यग्राविति ध्वनिः॥ विधौ सक्ताविति पाठः कल्प्यः। तावत् श्रुतयः कर्णा एव...शु... ॥२६॥

[ समाप्ता चमत्कार-तरङ्गिणी ]

प्रा० प्र०—प्रसारणमंगुली-पर्वारोहावरोह-सङ्केतः। "अंगुली-पर्व-संकेते यापनं सारणं मतम्" इति वामनः। सतां कवीनामित्याशयः। सूक्तयः सुवचनानीति दिक् ॥२६॥

इति महाराज-पद-महनीय-घनश्यामेन विरचितायां शिवरात्रि-चतुर्थ-यामारब्ध-
परिपूरितायां विद्ध-शालभञ्जिका-प्राण-प्रतिष्ठा-
नाम-व्याख्यायां चतुर्थोऽङ्कः ॥

[ समाप्ता प्राणप्रतिष्ठा ]

1. विधौ व्यग्रौ। 2. V. r. वेधसः। 3. V. r. विधुर।